श्रीरस्तु

श्रीवैष्णवसंप्रदाय-प्रवर्तक-सकलपूर्वाचार्यानुगृहीत

सकलस्तोत्रग्रन्थसनाथा

# स्तोत्रमाला


परिष्कारकः पर्यवेक्षकश्च

## श्रीकाञ्ची प्रतिवादिभयङ्कर - अण्णङ्गराचार्यः

अनेकग्रन्थमालासंपादकः





प्राप्तिस्थानम् :

**ग्रन्थमालाकार्यालयः**

39 सन्निधिवीथी

काञ्चीपुरम्

1958 मूल्यम् 3—0—0 रूप्याणि.


श्रीवैष्णवसंप्रदाय-प्रवर्तक-सकलपूर्वाचार्यानुगृहीत

# स्तोत्राणामनुक्रमणिका

श्रीरस्तु

श्रीवैष्णवसंप्रदाय-प्रवर्तक-सकलपूर्वाचार्यानुगृहीत

सकलस्तोत्रग्रन्थसनाथा

# स्तोत्रमाला

परिष्कारकः पर्यवेक्षकश्च

**श्रीकाञ्ची प्रतिवादिभयङ्कर - अण्णङ्गराचार्यः**

अनेकग्रन्थमालासंपादकः



प्राप्तिस्थानम् :

**ग्रन्थमालाकार्यालयः**

39 सन्निधिवीथी

**काञ्चीपुरम्**

1958 मूल्यम् 3-0-0 रूप्याणि.

श्रीवैष्णवसंप्रदाय-प्रवर्तक-सकलपूर्वाचार्यानुगृहीत

# स्तोत्राणामनुक्रमणिका







॥ श्रीरस्तु ॥

॥ श्रीमते रामानुजाय नमः ॥

# ॥ स्तोत्रमाला ॥

श्रीकुलशेखरसूरिभिरनुगृहीता

## ॥ मुकुन्दमाला ॥

**घुष्यते यस्य नगरे रङ्गयात्रा दिनेदिने । तमहं शिरसा वन्दे राजानं कुलशेखरम् ॥**

श्रीवल्लभेति वरदेति दयापरेति भक्तप्रियेति भवलुण्ठनकोविदेति ।
नाथेति नागशयनेति जगन्निवासेति आलापिनं प्रतिपदं कुरु मां मुकुन्द ॥ १ ॥

जयतु जयतु देवो देवकीनन्दनोऽयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलाङ्गः जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ २ ॥

मुकुन्द! मूर्ध्ना प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम् । अविस्मृतिस्त्वच्चरणारविन्दे भवेभवे मेऽस्तु भवत्प्रसादात् ॥

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः कुम्भीपाकं गुरुमपि हरे! नारकं नापनेतुम् ।
रम्या रामा मृदुतनुलता नन्दने नापि रन्तुं भावेभावे हृदयभवने भावयेयं भवन्तम् ॥ ४ ॥

नास्था धर्मे न वसुनिचये नैव कामोपभोगे यद्यद्भव्यं भवतु भगवन्! पूर्वकर्मानुरूपम् ।
एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥ ५ ॥

दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक! प्रकामम् ।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ॥ ६ ॥

कृष्ण! त्वदीयपदपङ्कजपञ्जरान्तः अद्यैव मे विशतु मानसराजहंसः ।
प्राणप्रयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥ ७ ॥

चिन्तयामि हरिमेव सन्ततं मन्दमन्दहसिताननाम्बुजम् । नन्दगोपतनयं परात्परं नारदादिमुनिबृन्दवन्दितम् ॥

करचरणसरोजे कान्तिमन्नेत्रमीने श्रममुषि भुजवीचिव्याकुलेऽगाधमार्गे ।
हरिसरसि विगाह्यापीय तेजोजलौघं भवमरुपरिखिन्नः खेदमद्य त्यजामि ॥ ९ ॥

सरसिजनयने सशङ्खचक्रे मुरभिदि मा विरम स्वचित्त! रन्तुम् ।
सुखतरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम् ॥ १० ॥

माभीर्मन्दमनो विचिन्त्य बहुधा यामीश्चिरं यातनाः नामी नः प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥ ११ ॥

भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् ।
विषमविषयतोये मज्जतामप्लवानां भवतु शरणमेको विष्णुपोतो नराणाम् ॥ १२ ॥

भवजलधिमगाधं दुस्तरं निस्तरेयं कथमहमिति चेतो मास्म गाः कातरत्वम् ।
सरसिजदृशि देवे तावकी भक्तिरेका नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥ १३ ॥

तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले दारावर्ते तनयसहजग्राहसङ्घाकुले च ।
संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन् पादाम्भोजे वरद ! भवतो भक्तिनावं प्रयच्छ ॥

माद्राक्षं क्षीणपुण्यान्क्षणमपि भवतो भक्तिहीनान्पदाब्जे माश्रौषं श्राव्यबन्धं तव चरितमपास्यान्यदाख्यानजातम् ।
मास्मार्षं माधव ! त्वामपि भुवनपते ! चेतसाऽपह्नुवानान् माभूवं त्वत्सपर्याव्यतिकररहितो जन्मजन्मान्तरेऽपि ॥

जिह्वे ! कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं पाणिद्वन्द्व ! समर्चयाच्युतकथाः श्रोत्रद्वय ! त्वं शृणु ।
कृष्णं लोकय लोचनद्वय ! हरेर्गच्छांघ्रियुग्मालयं जिघ्र घ्राण ! मुकुन्दपादतुलसीं मूर्धन्नमाधोक्षजम् ॥ १६ ॥

हे लोकाः ! शृणुत प्रसूतिमरणव्याधेश्चिकित्सामिमां योगज्ञास्समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः ।
अन्तर्ज्योतिरमेयमेकममृतं कृष्णाख्यमापीयतां तत्पीतं परमौषधं वितनुते निर्वाणमात्यन्तिकम् ॥ १७ ॥

हे मर्त्याः ! परमं हितं शृणुत वो वक्ष्यामि संक्षेपतः संसारार्णवमापदूर्मिबहुलं सम्यक्प्रविश्य स्थिताः ।
नानाज्ञानमपास्य चेतसि नमो नारायणायेत्यमुं मन्त्रं सप्रणवं प्रणामसहितं प्रावर्तयध्वं मुहुः ॥ १८ ॥

पृथ्वी रेणुरणुः पयांसि कणिका फल्गुः स्फुलिङ्गो लघुः तेजो निःश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः ।
क्षुद्रा रुद्रपितामहप्रभृतयः कीटास्समस्ताः सुराः दृष्टे यत्र स तावको विजयते भूमावधूतावधिः ॥ १९ ॥

बद्धेनाञ्जलिना नतेन शिरसा गात्रैस्सरोमोद्गमैः कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबाष्पाम्बुना ।
नित्यं त्वच्चरणारविन्दयुगलध्यानामृतास्वादिनाम् अस्माकं सरसीरुहाक्ष सततं संपद्यतां जीवितम् ॥ २० ॥

हे गोपालक ! हे कृपाजलनिधे ! हे सिंधुकन्यापते ! हे कंसान्तक ! हे गजेन्द्रकरुणापारीण ! हे माधव ! ।
हे रामानुज ! हे जगत्त्रयगुरो ! हे पुण्डरीकाक्ष मां हे गोपीजननाथ पालय परं जनामि न त्वां विना ॥ २१ ॥

भक्तापायभुजङ्गगारुडमणिस्त्रैलोक्यरक्षामणिः गोपीलोचनचातकाम्बुदमणिस्सौन्दर्यमुद्रामणिः ।
यः कान्तामणिरुक्मिणीघनकुचद्वन्द्वैकभूषामणिः श्रेयो देवशिखामणिर्दिशतु नो गोपालचूडामणिः ॥

शत्रुच्छेदैकमन्त्रं सकलमुपनिषद्वाक्यसंपूज्यमन्त्रं संसारोत्तारमन्त्रं समुपचिततमस्सङ्घनिर्याणमन्त्रम् ।
सर्वैश्वर्यैकमन्त्रं व्यसनभुजगसन्दष्टसन्त्राणमन्त्रं जिह्वे श्रीकृष्णमन्त्रं जप जप सततं जन्मसाफल्यमन्त्रम् ॥

व्यामोहप्रशमौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं दैत्येन्द्रार्तिकरौषधं त्रिभुवने सञ्जीवनैकौषधम् ।
भक्तात्यन्तहितौषधं भवभयप्रध्वंसनैकौषधं श्रेयःप्राप्तिकरौषधं पिब मनः श्रीकृष्णदिव्यौषधम् ॥ २४ ॥

आम्नायाभ्यसनान्यरण्यरुदितं वेदव्रतान्यन्वहं मेदश्छेदफलानि पूर्तविधयस्सर्वे हुतं भस्मनि ।
तीर्थानामवगाहनानि च गजस्नानं विना यत्पदद्वन्द्वाम्भोरुहसंस्मृतीर्विजयते देवस्स नारायणः ॥ २५ ॥

श्रीमन्नाम प्रोच्य नारायणाख्यं के न प्रापुर्वाञ्छितं पापिनोऽपि ।
हा नः पूर्वं वाक्प्रवृत्ता न तस्मिन् तेन प्राप्तं गर्भवासादिदुःखम् ॥ २६ ॥

मज्जन्मनः फलमिदं मधुकैटभारे मत्प्रार्थनीयमदनुग्रह एष एव ।
त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥ २७ ॥

नाथे नः पुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति ।
य कंचित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगयामहे नरमहो मूका वराका वयम् ॥ २८ ॥

मदन परिहर स्थितिं मदीये मनसि मुकुन्दपदारविन्दधाम्नि ।
हरनयनकृशानुना कृशोऽसि स्मरसि न चक्रपराक्रमं मुरारेः ॥ २९ ॥

तत्वं ब्रुवाणानि परं परस्मान्मधु क्षरन्तीव सतां फलानि । प्रावर्तय प्राञ्जलिरस्मि जिह्वे नामानि नारायणगोचराणि ॥

इदं शरीरं परिणामपेशलं पतत्यवश्यं श्लथसन्धिजर्झरम् ।
किमौषधैः क्लिश्यसि मूढ दुर्मते ! निरामयं कृष्णरसायनं पिब ॥ ३१ ॥

दारा वाराकरवरसुता ते तनूजो विरिञ्चिः स्तोता वेदस्तव सुरगणो भृत्यवर्गः प्रसादः ।
मुक्तिर्माया जगदविकलं तावकी देवकी ते माता मित्रं बलरिपुसुतस्त्वय्यतोऽन्यन्न जाने ॥ ३२ ॥

कृष्णो रक्षतु नो जगत्त्रयगुरुः कृष्णं नमस्याम्यहं कृष्णेनामरशत्रवो विनिहताः कृष्णाय तस्मै नमः ।
कृष्णादेव समुत्थितं जगदिदं कृष्णस्य दासोऽस्म्यहं कृष्णे तिष्ठति सर्वमेतदखिलं हे कृष्ण ! संरक्ष माम् ॥

स त्वं प्रसीद भगवन् कुरु मय्यनाथे विष्णो कृपां परमकारुणिकः किल त्वम् ।
संसारसागरनिमग्नमनन्त दीनम् उद्धर्तुमर्हसि हरे पुरुषोत्तमोऽसि ॥ ३४ ॥

नमामि नारायणपादपङ्कजं करोमि नारायणपूजनं सदा । वदामि नारायणनाम निर्मलं स्मरामि नारायणतत्त्वमव्ययम् ॥
श्रीनाथ नारायण वासुदेव श्रीकृष्ण भक्तप्रिय चक्रपाणे । श्रीपद्मनाभाच्युत कैटभारे श्रीराम पद्माक्ष हरे मुरारे ॥

अनन्त वैकुण्ठ मुकुन्द कृष्ण गोविन्द दामोदर माधवेति ।
वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनाभिमुख्यम् ॥ ३७ ॥

ध्यायन्ति ये विष्णुमनन्तमव्ययं हृत्पद्ममध्ये सततं व्यवस्थितम् ।
समाहितानां सतताभयप्रदं ते यान्ति सिद्धिं परमां च वैष्णवीम् ॥ ३८ ॥

क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये । भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ ३९ ॥

यस्य प्रियौ श्रुतिधरौ कविलोकवीरौ मित्रे द्विजन्मवरपद्मशरावभूताम् ।
तेनाम्बुजाक्षचरणाम्बुजषट्पदेन राज्ञा कृता कृतिरियं कुलशेखरेण ॥ ४० ॥

॥ इति मुकुन्दमाला समाप्ता ॥

श्रीभगवद्यामुनमुनिभिरनुगृहीता

## ॥ चतुःश्लोकी ॥

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः । वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥

कान्तस्ते पुरुषोत्तमः फणिपतिः शय्यासनं वाहनं वेदात्मा विहगेश्वरो यवनिका माया जगन्मोहिनी ।
ब्रह्मेशादिसुरव्रजस्सदयितः त्वद्दासदासीगणः श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम् ॥ १ ॥

यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुः नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः ।
तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयः लोकैकेश्वरि लोकनाथदयिते दान्ते दयां ते विदन् ॥

ईषत्त्वत्करुणानिरीक्षणसुधासन्धुक्षणाद्रक्ष्यते नष्टं प्राक्तदलाभतस्त्रिभुवनं संप्रत्यनन्तोदयम् ।
श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हि चित् ॥ ३ ॥

शान्तानन्तमहाविभूति परमं यद्ब्रह्म रूपं हरेः मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम् ।
यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि तान्याहुः स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते ॥ ४ ॥

आकारत्रयसंपन्नामरविन्दनिवासिनीम् । अशेषजगदीशित्रीं वन्दे वरदवल्लभाम् ॥

॥ इति चतुःश्लोकी समाप्ता ॥

---

श्रीभगवद्यामुनमुनिभिरनुगृहीतम्

## ॥ स्तोत्ररत्नम् ॥

स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम् । स्तोत्रयामास योगीन्द्रस्तं वन्दे यामुनाह्वयम् ।
नमो नमो यामुनाय यामुनाय नमो नमः । नमो नमो यामुनाय यामुनाय नमो नमः ॥

नमोऽचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये । नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे ॥ १ ॥

तस्मै नमो मधुजिदङ्घ्रिसरोजतत्त्वज्ञानानुरागमहिमातिशयान्तसीम्ने ।
नाथाय नाथमुनयेऽत्र परत्र चापि नित्यं यदीयचरणौ शरणं मदीयम् ॥ २ ॥

भूयो नमोऽपरिमिताच्युतभक्तितत्त्वज्ञानामृताब्धिपरिवाहशुभैर्वचोभिः ।
लोकेऽवतीर्णपरमार्थसमग्रभक्तियोगाय नाथमुनये यमिनां वराय ॥ ३ ॥

तत्त्वेन यश्चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतीरुदारः ।
सन्दर्शयन्निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय ॥ ४ ॥

माता पिता युवतयस्तनया विभूतिस्सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्वकुलाभिरामं श्रीमत्तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना ॥ ५ ॥

यन्मूर्ध्नि मे श्रुतिशिरस्सु च भाति यस्मिन्नस्मन्मनोरथपथस्सकलस्समेति ।
स्तोष्यामि नः कुलधनं कुलदैवतं तत्पादारविन्दमरविन्दविलोचनस्य ॥ ६ ॥
तत्त्वेन यस्य महिमार्णवशीकराणुः शक्यो न मातुमपि शर्वपितामहाद्यैः ।
कर्तुं तदीयमहिमस्तुतिमुद्यताय मह्यं नमोऽस्तु कवये निरपत्रपाय ॥ ७ ॥
यद्वा श्रमावधि यथामति वाऽप्यशक्तः स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः ।
वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः को मज्जतोरणुकुलाचलयोर्विशेषः ॥ ८ ॥
किञ्चैष शक्त्यतिशयेन न तेऽनुकम्प्यः स्तोताऽपि तु स्तुतिकृतेन परिश्रमेण ।
तत्र श्रमस्तु सुलभो मम मन्दबुद्धेरित्युद्यमोऽयमुचितो मम चाब्जनेत्र ! ॥ ९ ॥
नावेक्षसे यदि ततो भुवनान्यमूनि नालं प्रभो ! भवितुमेव कुतः प्रवृत्तिः ।
एवं निसर्गसुहृदि त्वयि सर्वजन्तोः स्वामिन्न चित्रमिदमाश्रितवत्सलत्वम् ॥ १० ॥
स्वाभाविकानवधिकातिशयेशितृत्वं नारायण ! त्वयि न मृष्यति वैदिकः कः ।
ब्रह्मा शिवश्शतमखः परमस्स्वराडित्येतेऽपि यस्य महिमार्णवविप्रुषस्ते ॥ ११ ॥
कश्श्रीः श्रियः परमसत्त्वसमाश्रयः कः कः पुण्डरीकनयनः पुरुषोत्तमः कः ।
कस्यायुतायुतशतैककलांशकांशे विश्वं विचित्रचिदचित्प्रविभागवृत्तम् ॥ १२ ॥
वेदापहारगुरुपातकदैत्यपीडाद्यापद्विमोचनमहिष्ठफलप्रदानैः ।
कोऽन्यः प्रजापशुपती परिपाति कस्य पादोदकेन स शिवस्स्वशिरोधृतेन ॥ १३ ॥
कस्योदरे हरविरिञ्चिमुखः प्रपञ्चः को रक्षतीममजनिष्ट च कस्य नाभेः ।
क्रान्त्वा निगीर्य पुनरुद्गिरति त्वदन्यः कः केन वैष परवानिति शक्यशङ्कः ॥ १४ ॥
त्वां शीलरूपचरितैः परमप्रकृष्टसत्त्वेन सात्त्विकतया प्रबलैश्च शास्त्रैः ।
प्रख्यातदैवपरमार्थविदां मतैश्च नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम् ॥ १५ ॥
उल्लङ्घितत्रिविधसीमसमातिशायिसंभावनं तव परिव्रडिमस्वभावम् ।
मायाबलेन भवताऽपि निगूह्यमानं पश्यन्ति केचिदनिशं त्वदनन्यभावाः ॥ १६ ॥
यदण्डमण्डान्तरगोचरं च यद्दशोत्तराण्यावरणानि यानि च । गुणाः प्रधानं पुरुषः परं पदं परात्परं ब्रह्म च ते विभूतयः ॥
वशी वदान्यो गुणवानृजुः शुचिर्मृदुर्दयालुर्मधुरः स्थिरस्समः ।
कृती कृतज्ञस्त्वमसि स्वभावतस्समस्तकल्याणगुणामृतोदधिः ॥ १८ ॥
उपर्युपर्यब्जभुवोऽपि पूरुषान् प्रकल्प्य ते ये शतमित्यनुक्रमात् ।
गिरस्त्वदेकैकगुणावधीप्सया सदा स्थिता नोद्यमतोऽतिशेरते ॥ १९ ॥
त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः । भवन्ति लीलाविधयश्च वैदिकास्त्वदीयगम्भीरमनोऽनुसारिणः
नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये ।
नमो नमोऽनन्तमहाविभूतये नमो नमोऽनन्तदयैकसिन्धवे ॥ २१ ॥

न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमांस्त्वच्चरणारविन्दे । अकिञ्चनोऽनन्यगतिश्शरण्य ! त्वत्पादमूलं शरणं प्रपद्ये ॥
न निन्दितं कर्म तदस्ति लोके सहस्रशो यन्न मया व्यधायि । सोऽहं विपाकावसरे मुकुन्द ! क्रन्दामि संप्रत्यगतिस्तवाग्रे
निमज्जतोऽनन्तभवार्णवान्तश्चिराय मे कूलमिवासि लब्धः । त्वयापि लब्धं भगवन्निदानीमनुत्तमं पात्रमिदं दयायाः ॥
अभूतपूर्वं मम भावि किं वा सर्वं सहे मे सहजं हि दुःखम् । किंतु त्वदग्रे शरणागतानां पराभवो नाथ ! न तेऽनुरूपः

निरासकस्यापि न तावदुत्सहे महेश ! हातुं तव पादपङ्कजम् ।
रुषा निरस्तोऽपि शिशुस्स्तनन्धयो न जातु मातुश्चरणौ जिहासति ॥

तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति । स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते

त्वदङ्घ्रिमुद्दिश्य कदाऽपि केनचिद्यथा तथा वाऽपि सकृत्कृतोऽञ्जलिः ।
तदैव मुष्णात्यशुभान्यशेषतः शुभानि पुष्णाति न जातु हीयते ॥ २८ ॥

उदीर्णसंसारदवाशुशुक्षणिं क्षणेन निर्वाप्य परां च निर्वृतिम् । प्रयच्छति त्वच्चरणारुणाम्बुजद्वयानुरागामृतसिन्धुशीकरः
विलासविक्रान्तपरावरालयं नमस्यदार्तिक्षपणे कृतक्षणम् । धनं मदीयं तव पादपङ्कजं कदा नु साक्षात्करवाणि चक्षुषा ॥
कदा पुनश्शङ्खरथाङ्गकल्पकध्वजारविन्दाङ्कुशवज्रलाञ्छनम् । त्रिविक्रम ! त्वच्चरणाम्बुजद्वयं मदीयमूर्धानमलङ्करिष्यति
विराजमानोज्ज्वलपीतवाससं स्मितातसीसूनसमामलच्छविम् । निमग्ननाभिं तनुमध्यमुन्नतं विशालवक्षःस्थलशोभिलक्षणम्
चकासतं ज्याकिणकर्कशैः शुभैश्चतुर्भिराजानुविलम्बिभिर्भुजैः । प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिः
उदग्रपीनांसविलंबिकुण्डलालकावलीबन्धुरकंबुकन्धरम् । मुखश्रिया न्यक्कृतपूर्णनिर्मलामृतांशुबिम्बाम्बुरुहोज्ज्वलश्रियम्
प्रबुद्धमुग्धाम्बुजचारुलोचनं सविभ्रमभ्रूलतमुज्ज्वलाधरम् । शुचिस्मितं कोमलगण्डमुन्नसं ललाटपर्यन्तविलम्बितालकम्
स्फुरत्किरीटाङ्गदहारकण्ठिकामणीन्द्रकाञ्चीगुणनूपुरादिभिः । रथाङ्गशङ्खासिगदाधनुर्वरैर्लसत्तुलस्या वनमालयोज्ज्वलम् ॥
चकर्थ यस्या भवनं भुजान्तरं तव प्रियं धाम यदीयजन्मभूः । जगत्समस्तं यदपाङ्गसंश्रयं यदर्थमम्भोधिरमन्थ्यबन्धि च
स्ववैश्वरूप्येण सदाऽनुभूतयाऽप्यपूर्ववद्विस्मयमादधानया । गुणेन रूपेण विलासचेष्टितैस्सदा तवैवोचितया तव श्रिया
तया सहासीनमनन्तभोगिनि प्रकृष्टविज्ञानबलैकधामनि । फणामणिव्रातमयूखमण्डलप्रकाशमानोदरदिव्यधामनि ॥
निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः । शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीरिते जनैः ॥
दासस्सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः । उपस्थितं तेन पुरो गरुत्मता त्वदङ्घ्रिसंमर्दकिणाङ्कशोभिना
त्वदीयभुक्तोज्झितशेषभोजिना त्वया निसृष्टात्मभरेण यद्यथा । प्रियेण सेनापतिना न्यवेदि तत्तथाऽनुजानन्तमुदारवीक्षणैः
हताखिलक्लेशमलैस्स्वभावतस्सदानुकूल्यैकरसैस्तवोचितैः । गृहीततत्तत्परिचारसाधनैर्निषेव्यमाणं सचिवैर्यथोचितम् ॥
अपूर्वनानारसभावनिर्भरप्रबद्धया मुग्धविदग्धलीलया । क्षणाणुवत्क्षिप्तपरादिकालया प्रहर्षयन्तं महिषीं महाभुजम् ॥
अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतोदधिम् । श्रियःश्रियं भक्तजनैकजीवितं समर्थमापत्सखमर्थिकल्पकम्
भवन्तमेवानुचरन्निरन्तरं प्रशान्तनिश्शेषमनोरथान्तरः । कदाऽहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि सनाथजीवितः

धिगशुचिमविनीतं निर्दयं मामलज्जं परमपुरुष ! योऽहं योगिवर्याग्रगण्यैः ।
विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं तव परिजनभावं कामये कामवृत्तः ॥ ४७ ॥

अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे । अगतिं शरणागतं हरे ! कृपया केवलमात्मसात्कुरु ॥४८॥
अविवेकघनान्धदिङ्मुखे बहुधा सन्ततदुःखवर्षिणि । भगवन्भवदुर्दिने पथःस्खलितं मामवलोकयाच्युत ॥
न मृषा परमार्थमेव मे शृणु विज्ञापनमेकमग्रतः । यदि मे न दयिष्यसे ततो दयनीयस्तव नाथ ! दुर्लभः ॥
तदहं त्वदृते न नाथवान् मदृते त्वं दयनीयवान्न च । विधिनिर्मितमेतदन्वयं भगवन्पालय मास्म जीहपः ॥
वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथातथाविधः । तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः ॥
मम नाथ यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव । नियतस्वमिति प्रबुद्धधीरथवा किं नु समर्पयामि ते ॥
अवबोधितवानिमां यथा मयि नित्यां भवदीयतां स्वयम् । कृपयैतदनन्यभोग्यतां भगवन्भक्तिमपि प्रयच्छ मे ॥
तव दास्यसुखैकसङ्गिनां भवनेष्वस्त्वपि कीटजन्म मे । इतरावसथेषु मास्मभूदपि मे जन्म चतुर्मुखात्मना ॥
सकृत्त्वदाकारविलोकनाशया तृणीकृतानुत्तमभुक्तिमुक्तिभिः । महात्मभिर्मामवलोक्यतां नय क्षणेपि ते यद्विरहोतिदुस्सहः

न देहं न प्राणान्न च सुखमशेषाभिलषितं न चात्मानं नान्यत्किमपि तव शेषत्वविभवात् ।
बहिर्भूतं नाथ ! क्षणमपि सहे यातु शतधा विनाशं तत्सत्यं मधुमथन ! विज्ञापनमिदम् ॥ ५७ ॥
दुरन्तस्यानादेरपरिहरणीयस्य महतो निहीनाचारोऽहं नृपशुरशुभस्यास्पदमपि ।
दयासिन्धो ! बन्धो ! निरवधिकवात्सल्यजलधे ! तव स्मारंस्मारं गुणगणमितीच्छामि गतभीः ॥ ५८ ॥
अनिच्छन्नप्येवं यदि पुनरितीच्छन्निव रजस्तमश्छन्नश्छद्मस्तुतिवचनभङ्गीमरचयम् ।
तथाऽपीत्थंरूपं वचनमवलम्ब्यापि कृपया त्वमेवैवंभूतं धरणिधर ! मे शिक्षय मनः ॥ ५९ ॥
पिता त्वं माता त्वं दयिततनयस्त्वं प्रियसुहृत् त्वमेव त्वं मित्रं गुरुरसि गतिश्चासि जगताम् ।
त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहं प्रपन्नश्चैवं सत्यहमपि तवैवास्मि हि भरः ॥ ६० ॥
जनित्वाऽहं वंशे महति जगति ख्यातयशसां शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदाम् ।
निसर्गादेव त्वच्चरणकमलैकान्तमनसाम् अधोऽधः पापात्मा शरणद ! निमज्जामि तमसि ॥ ६१ ॥
अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः ।
नृशंसः पापिष्ठः कथमहमितो दुःखजलधेः अपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥ ६२ ॥

रघुवर ! यदभूस्त्वं तादृशो वायसस्य प्रणत इति दयालुर्यच्च चैद्यस्य कृष्ण ! ।
प्रतिभवमपराद्धुर्मुग्ध ! सायुज्यदोऽभूः वद किमपदमागस्तस्य तेऽस्ति क्षमायाः ॥ ६३ ॥

ननु प्रपन्नस्सकृदेव नाथ ! तवाहमस्मीति च याचमानः । तवानुकम्प्यः स्मरतः प्रतिज्ञां मदेकवर्जं किमिदं व्रतं ते ॥
अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिमात्मवन्तम् । पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा ॥६५॥

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः । वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥
इति स्तोत्ररत्नं समाप्तम् ॥

श्रीकाञ्चीपूर्णमुनिभिरनुगृहीतं

## ॥ देवराजाष्टकम् ॥

श्रीमत्काञ्चीमुनिं वन्दे कमलापतिनन्दनम् । वरदांघ्रिसदासङ्गरसायनपरायणम् ॥
देवराजदयापात्रं श्रीकाञ्चीपूर्णमुत्तमम् । रामानुजमुनेर्मान्यं वन्देऽहं सज्जनाश्रयम् ॥

नमस्ते हस्तिशैलेश ! श्रीमन्नम्बुजलोचन ! । शरणं त्वां प्रपन्नोऽस्मि प्रणतार्तिहराच्युत ! ॥ १ ॥
समस्तप्राणिसन्त्राणप्रवीणकरुणोल्बण । विलसन्तु कटाक्षास्ते मय्यस्मिन् जगतां पते ॥ २ ॥
निन्दिताचारकरणं निवृत्तं कृत्यकर्मणः । पापीयांसममर्यादं पहि मां वरदप्रभो ! ॥ ३ ॥
संसारमरुकान्तारे दुर्व्याधिव्याघ्रभीषणे । विषयक्षुद्रगुल्माढ्ये तृषापादपशालिनि ॥ ४ ॥
पुत्रदारगृहक्षेत्रमृगतृष्णाम्बुपुष्कले । कृत्याकृत्यविवेकान्धं परिभ्रान्तमितस्ततः ॥ ५ ॥
अजस्रं जाततृष्णार्तमवसन्नाङ्गमक्षमम् । क्षीणशक्तिबलारोग्यं केवलं क्लेशसंश्रयम् ॥ ६ ॥
सन्ततं विविधैर्दुःखैर्दुर्वचैरेवमादिभिः । देवराज ! दयासिन्धो ! देवदेव ! जगत्पते ! ॥ ७ ॥
त्वदीक्षणसुधासिन्धुवीचिविक्षेपशीकरैः । कारुण्यमारुतानीतैः शीतलैरभिषिञ्च माम् ॥ ८ ॥

इति देवराजाष्टकं समाप्तम् ।

श्रीभगवद्रामानुजमुनिभिरनुगृहीतं

## ॥ शरणागतिगद्यम् ॥

यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः रामानुजस्य चरणौ शरणं प्रपद्ये ॥

वन्दे वेदान्तकर्पूरचामीकरकरण्डकम् । रामानुजार्यमार्याणां चूडामणिमहर्निशम् ॥

भगवन्नारायणाभिमतानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासङ्ख्येयकल्याणगुणगणाम्, पद्मवनालयाम्, भगवतीम् , श्रियम् , देवीम् , नित्यानपायिनीम् , निरवद्याम्, देवदेवदिव्यमहिषीम्, अखिलजगन्मातरम्, अस्मन्मातरम् , अशरण्यशरण्याम् , अनन्यशरणश्शरणमहं प्रपद्ये ॥ १ ॥

पारमार्थिकभगवच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैङ्कर्यप्राप्त्यपेक्षया पारमार्थिकी भगवच्चरणारविन्दशरणागतिर्यथावस्थिता अविरताऽस्तु मे ॥ २ ॥

अस्तु ते ॥ ३ ॥ तयैव सर्वं संपत्स्यते ॥ ४ ॥

अखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूप ! स्वाभिमतानुरूपैकरूपा-

चिन्त्यदिव्याद्भुतनित्य निरवद्यनिरतिशयौज्ज्वल्य सौन्दर्यसौगन्ध्य सौकुमार्यलावण्य यौवनाद्यनन्त गुणनिधिदिव्यरूप ! स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजस्सौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यगाम्भीर्यौ-दार्यचातुर्यस्थैर्यधैर्यशौर्यपराक्रमसत्यकामसत्यसङ्कल्पकृतित्वकृतज्ञताद्यसंख्येयकल्याणगुणगणौघमहार्णव स्वोचितविविध-विचित्रानन्ताश्चर्य नित्यनिरवद्यनिरतिशयसुगन्धनिरतिशयसुखस्पर्शनिरतिशयौज्ज्वल्यकिरीटमकुटचूडावतंसमकरकुण्डल-ग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुराद्यपरिमितदिव्यभूषण ! स्वानुरूपा-चिन्त्यशक्तिशङ्खचक्रगदा[ऽसि]शार्ङ्गाद्यसंख्येयनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुध ! स्वाभिमतनित्यनिरवद्यानु-रूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभ ! एवंभूतभूमिनीलानायक ! स्व-च्छन्दानुवर्तिस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरतिरूपनित्यनिरवद्यनिरतिशयज्ञानक्रियैश्वर्याद्यनन्तगुणगणशेषशेषा-शनगरुडप्रमुखनानाविधानन्तपरिजनपरिचारिकापरिचरितचरणयुगल ! परमयोगिवाङ्मनसापरिच्छेद्यस्वरूपस्वभावस्वा-भिमतविविधविचित्रानन्तभोग्यभोगोपकरणभोगस्थानसमृद्धानन्ताश्चर्यानन्तमहाविभवानन्तपरिमाणनित्यनिरवद्यनिरति-शयवैकुण्ठनाथ ! स्वसङ्कल्पानुविधायिस्वरूपस्थितिप्रवृत्तिस्वशेषतैकस्वभावप्रकृतिपुरुषकालात्मकविविधविचित्रानन्तभोग्य-भोक्तृवर्गभोगोपकरणभोगस्थानरूपनिखिलजगदुदयविभवलयलील ! सत्यकाम ! सत्यसङ्कल्प ! परब्रह्मभूत ! पुरु-षोत्तम ! महाविभूते ! श्रीमन् ! नारायण ! श्रीवैकुण्ठनाथ ! अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यसौन्दर्यमहोदधे ! अनालोचितविशेषाशेषलोकशरण्य ! प्रणतार्तिहर ! आश्रितवात्सल्यैकजलधे ! अनवरतविदितनिखिलभूतजातयाथात्म्य ! अशेषचराचरभूतनिखिलनियमननिरत, अशेषचिदचिद्वस्तुशेषिभूत ! निखिलजगदाधार ! अखिलजगत्स्वामिन् ! अस्मत्स्वामिन् ! सत्यकाम ! सत्यसङ्कल्प, सकलेतरविलक्षण, अर्थिकल्पक ! आपत्सख ! श्रीमन् ! नारायण ! अशरण्यशरण्य ! अनन्यशरणस्त्वत्पादारविन्दयुगलं शरणमहं प्रपद्ये ॥ ५ ॥

[ अत्र द्वयम् ॥ ]

पितरं मातरं दारान् पुत्रान् बन्धून् सखीन् गुरून् । रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च ॥ ६ ॥

सर्वधर्मांश्च संत्यज्य सर्वकामांश्च साक्षरान् । लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो ! ॥ ७ ॥

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुस्त्वमेव । त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥

पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।

न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ९ ॥

तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् । पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम्

मनोवाक्कायैरनादिकाल प्रवृत्तानन्ताकृत्यकरणकृत्याकरणभगवदपचारभागवतापचारासह्यापचाररूप नानाविधा-नन्तापचारान् आरब्धकार्यान् अनारब्धकार्यान् कृतान् क्रियमाणान् करिष्यमाणांश्च सर्वानशेषतः क्षमस्व ॥ १२ ॥

अनादिकालप्रवृत्तं विपरीतज्ञानम् आत्मविषयं कृत्स्नजगद्विषयं च विपरीतवृत्तं चाशेषविषयमद्यापि वर्तमानं वर्तिष्यमाणं च सर्वं क्षमस्व ॥ १२ ॥

मदीयानादिकर्मप्रवाहप्रवृत्ताम् भगवत्स्वरूपतिरोधानकरीम् विपरीतज्ञानजननीम् स्वविषयायाश्च भोग्यबुद्धेर्जननीम् देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण चावस्थिताम् दैवीम् गुणमयीम् मायाम्ः दासभूतं 'शरणागतोऽस्मि ; तवास्मि दासः' इति वक्तारं मां तारय ॥ १३ ॥

* तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥
उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मतम् । आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥
इति श्लोकत्रयोदितज्ञानिनं मां कुरुष्व ॥ १४ ॥

* पुरुषस्स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया, * भक्त्या त्वनन्यया शक्यः, * मद्भक्तिं लभते पराम् इति स्थानत्रयोदितपरभक्तियुक्तं मां कुरुष्व ॥ १५ ॥

परभक्तिपरज्ञानपरमभक्त्येकस्वभावं मां कुरुष्व ॥ १६ ॥

परभक्तिपरज्ञानपरमभक्तिकृत परिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रिय भगवदनुभवोऽहं तथाविधभगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भवानि ॥

एवंभूतमत्कैङ्कर्यप्राप्त्युपायतयाऽवक्लृप्तसमस्तवस्तुविहीनोऽपि, अनन्ततद्विरोधिपापाक्रान्तोऽपि, अनन्तमदपचारयुक्तोऽपि, अनन्तमदीयापचारयुक्तोऽपि, अनन्तासह्यापचारयुक्तोऽपि, एतत्कार्यकारणभूतानादिविपरीताहङ्कारविमूढात्मस्वभावोऽपि, एतदुभयकार्यकारणभूतानादिविपरीतवासनासंबद्धोऽपि, एतदनुगुणप्रकृतिविशेषसंबद्धोऽपि एतन्मूलाध्यात्मिकाधिभौतिकाधिदैविकसुखदुःखतद्धेतुतदितरोपेक्षणीयविषयानुभवज्ञानसङ्कोचरूपमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिविघ्नप्रतिहतोऽपि येन केनापि प्रकारेण द्वयवक्ता त्वं केवलं मदीययैव दयया निःशेषविनष्टसहेतुकमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिविघ्नः, मत्प्रसादलब्धमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिः, मत्प्रसादादेव साक्षात्कृतयथावस्थितमत्स्वरूपरूपगुणविभूतिलीलोपकरणविस्तारः, अपरोक्षसिद्धमन्नियाम्यतामद्दास्यैकस्वभावात्मस्वरूपः, मदेकानुभवः, मद्दास्यैकप्रियः, परिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियमदनुभवस्त्वं तथाविधमदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भव ॥ १८ ॥

एवम्भूतोऽसि ॥ १९ ॥

आध्यात्मिकाधिभौतिकाधिदैविकदुःखविघ्नगन्धरहितस्त्वं द्वयमर्थानुसन्धानेन सह सदैवं वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्व ॥ २० ॥

शरीरपातसमये तु केवलं मदीययैव दयया अतिप्रबुद्धः, मामेवावलोकयन्नप्रच्युतपूर्वसंस्कारमनोरथः; जीर्णमिव वस्त्रं सुखेनेमां प्रकृतिं स्थूलसूक्ष्मरूपां विसृज्य, तदानीमेव मत्प्रसादलब्धमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियमदनुभवस्त्वं तथाविधमदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भविष्यसि ॥ २१ ॥

मा ते भूदत्र संशयः ॥ २२ ॥

* अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन, *रामो द्विर्नाभिभाषते, *सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ * सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ इति मयैव ह्युक्तम् ॥ २३ ॥

अतस्त्वं तव तत्त्वतो मज्ज्ञानदर्शनप्राप्तिषु निस्संशयस्सुखमास्स्व ॥ २४ ॥

अन्त्यकाले स्मृतिर्या तु तव कैङ्कर्यकारिता । तामेनां भगवन्नद्य क्रियमाणां कुरुष्व मे ॥

॥ इति शरणागतिगद्यं समाप्तम् ॥

---

श्रीभगवद्रामानुजमुनिभिरनुगृहीतं

# ॥ श्रीरङ्गगद्यम् ॥

चिदचित्परतत्त्वानां तत्त्वयाथार्थ्यवेदिने । रामानुजाय मुनये नमो मम गरीयसे ॥

स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदं क्लेशकर्माद्यशेषदोषासंस्पृष्टं स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजस्सौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यचातुर्यस्थैर्यधैर्यशौर्यपराक्रमसत्यकामसत्यसङ्कल्पकृतित्वकृतज्ञताद्यसंख्येयकल्याणगुणगणौघमहार्णवं परब्रह्मभूतं पुरुषोत्तमं श्रीरङ्गशायिनम् अस्मत्स्वामिनं प्रबुद्धनित्यनियाम्यनित्यदास्यैकरसात्मस्वभावोऽहं तदेकानुभवः तदेकप्रियः परिपूर्णं भगवन्तं विशदतमानुभवेन निरन्तरमनुभूय तदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भवानि ॥ १ ॥

स्वात्मनित्यनियाम्यनित्यदास्यैकरसात्मस्वभावानुसन्धानपूर्वक भगवदनवधिकातिशय स्वाम्याद्यखिलगुणगणानुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैङ्कर्यप्राप्त्युपायभूतभक्तितदुपायसम्यग्ज्ञानतदुपायसमीचीनक्रियातदनुगुणसात्त्विकतास्तिक्यादिसमस्तात्मगुणविहीनः दुरुत्तरानंततद्विपर्ययज्ञानक्रियानुगुणानादिपापवासनामहार्णवान्तर्निमग्नः तिलतैलवद्दारुवह्निवद्दुर्विवेचत्रिगुणक्षणक्षरणस्वभावाचेतनप्रकृतिव्याप्तिरूपदुरत्ययभगवन्मायातिरोहितस्वप्रकाशः अनाद्यविद्यासञ्चितानन्ताशक्यविस्रंसनकर्मपाशप्रग्रथितः अनागतानन्तकालसमीक्षयाऽप्यदृष्टसन्तारोपायः, निखिलजन्तुजातशरण्य ! श्रीमन् ! नारायण ! तव चरणारविन्दयुगलं शरणमहं प्रपद्ये ॥

एवमवस्थितस्याप्यर्थित्वमात्रेण परमकारुणिको भगवान् स्वानुभवप्रीत्योपनीतैकान्तिकात्यन्तिकनित्यकैङ्कर्यैकरतिरूपनित्यदास्यं दास्यतीति विश्वासपूर्वकं भगवन्तं नित्यकिङ्करतां प्रार्थये ॥ ३ ॥

तवानुभूतिसंभूतप्रीतिकारितदासताम् । देहि मे कृपया नाथ ! न जाने गतिमन्यथा ॥ ४ ॥

सर्वावस्थोचिताशेषशेषतैकरतिस्तव । भवेयं पुण्डरीकाक्ष ! त्वमेवैवं कुरुष्व माम् ॥ ५ ॥

एवंभूततत्त्वयाथात्म्यावबोधतदिच्छारहितस्यापि एतदुच्चारणमात्रावलम्बनेन उच्यमानार्थपरमार्थनिष्ठं मे मनस्त्वमेवाद्यैव कारय ॥ ६ ॥

अपारकरुणाम्बुधे! अनालोचितविशेषाशेषलोकशरण्य! प्रणतार्तिहर! आश्रितवात्सल्यैकमहोदधे! अनवरतविदितनिखिलभूतजातयाथात्म्य! सत्यकाम! सत्यसङ्कल्प! आपत्सख! काकुत्स्थ! श्रीमन्! नारायण! पुरुषोत्तम! श्रीरङ्गनाथ! मम नाथ! नमोऽस्तु ते ॥ ७ ॥

॥ इति श्रीरङ्गगद्यं समाप्तम् ॥

श्रीभगवद्रामानुजमुनिभिरनुगृहीतं

# ॥ श्रीवैकुण्ठगद्यम् ॥

यामुनार्यसुधाम्भोधिमवगाह्य यथामति । आदाय भक्तियोगाख्यं रत्नं संदर्शयाम्यहम् ॥ १ ॥

स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्, क्लेशकर्माद्यशेषदोषासंस्पृष्टम्, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यसंख्येयकल्याणगुणगणौघमहार्णवम्, परमपुरुषम्, भगवन्तम्, नारायणम्, स्वामित्वेन सुहृत्त्वेन गुरुत्वेन च परिगृह्य, ऐकान्तिकात्यन्तिकतत्पादाम्बुजद्वयपरिचर्यैकमनोरथः, तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः, तस्यैव भगवतो नारायणस्य, अखिलसत्त्वदयैकसागरस्य, अनालोचितगुणागुणाखण्डजनानुकूलामर्यादशीलवतः, स्वाभाविकानवधिकातिशयगुणवत्तया देवतिर्यङ्मनुष्याद्यखिलजनहृदयानन्दनस्य, आश्रितवात्सल्यैकजलधेः, भक्तजनसंश्लेषैकभोगस्य, नित्यज्ञानक्रियैश्वर्यादिभोगसामग्रीसमृद्धस्य, महाविभूतेः, श्रीमतश्चरणारविन्दयुगलम् अनन्यात्मसञ्जीवनेन तद्गतसर्वभावेन शरणमनुव्रजेत् ॥ २ ॥

ततश्च प्रत्यहम् आत्मोज्जीवनाय एवमनुस्मरेत् ॥ ३ ॥

चतुर्दशभुवनात्मकमण्डं दशगुणितोत्तरं चावरणसप्तकं समस्तं कार्यकारणजातमतीत्य वर्तमाने परमव्योमशब्दाभिधेये ब्रह्मादीनां वाङ्मनसागोचरे श्रीमति वैकुण्ठे दिव्यलोके सनकविधिशिवादिभिरप्यचिन्त्यस्वभावैश्वर्यैर्नित्यसिद्धैरनन्तैर्भगवदानुकूल्यैकभोगैः दिव्यपुरुषैर्महात्मभिरापूरिते तेषामपीयत्परिमाणम् इयदैश्वर्यम् ईदृशस्वभावम् इति परिच्छेत्तुमयोग्ये दिव्यावरणशतसहस्रावृते दिव्यकल्पकतरूपशोभिते दिव्योद्यानशतसहस्रकोटिभिरावृते अतिप्रमाणे दिव्यायतने कस्मिंश्चिद्विचित्रदिव्यरत्नमये दिव्यास्थानमण्टपे दिव्यरत्नस्तम्भशतसहस्रकोटिभिरुपशोभिते दिव्यनानारत्नकृतस्थलविचित्रिते दिव्यालङ्कारालंकृते परितः पतितैः पतमानैः पादपस्थैश्च नानागन्धवर्णैर्दिव्यपुष्पैश्शोभमानैर्दिव्यपुष्पोपवनैरुपशोभिते सङ्कीर्णपारिजातादिकल्पद्रुमोपशोभितैरसङ्कीर्णैश्च कैश्चिदन्तःस्थपुष्परत्नादिनिर्मितदिव्यलीलामण्टपशतसहस्रोपशोभितैस्सर्वदा अनुभूयमानैरपि अपूर्ववदाश्चर्यमावहद्भिः क्रीडाशैलशतसहस्रैरलंकृतैः कैश्चिन्नारायणदिव्यलीलाऽसाधारणैः कैश्चित्पद्मवनालयादिव्यलीलाऽसाधारणैस्साधारणैश्च कैश्चिच्छुक-

शारिकामयूरकोकिलादिभिः कोमलकूजितैराकुलैर्दिव्योद्यानशतसहस्रैरावृते मणिमुक्ताप्रवालकृतसोपानैर्दिव्यामलामृतरसोदकैर्दिव्याण्डजवरैरतिरमणीयदर्शनैरतिमनोहरमधुरस्वरैराकुलैः अन्तःस्थमुक्तामयदिव्यक्रीडास्थानोपशोभितैर्दिव्यसौगन्धिकवापीशतसहस्रैर्दिव्यराजहंसावलीविराजितैरावृते निरस्तातिशयानन्दैकरसतया चानन्त्याच्च प्रविष्टानुन्मादयद्भिः क्रीडोद्देशैर्विराजिते तत्र तत्र कृतदिव्यपुष्पपर्यङ्कोपशोभिते नानापुष्पासवास्वादमत्तभृङ्गावलीभिरुद्गीयमानदिव्यगान्धर्वेणापूरिते चन्दनागरुकर्पूरदिव्यपुष्पावगाहिमन्दानिलासेव्यमाने मध्ये पुष्पसञ्चयविचित्रिते महति दिव्ययोगपर्यङ्के अनन्तभोगिनि श्रीमद्वैकुण्ठैश्वर्यादिदिव्यलोकम् आत्मकान्त्या विश्वमाप्याययन्त्या शेषशेषासनादिसर्वपरिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञापयन्त्या शीलरूपगुणविलासादिभिरात्मानुरूपया श्रिया सहासीनम्, प्रत्यग्रोन्मीलितसरसिजसदृशनयनयुगलम्, स्वच्छनीलजीमूतसङ्काशम्, अत्युज्ज्वलपीतवाससम्, स्वया प्रभया अतिनिर्मलया अतिशीतलया स्वच्छया माणिक्याभया कृत्स्नं जगद्भासयन्तम्, अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतसागरम्, अतिसौकुमार्यादीषत्प्रस्विन्नवदालक्ष्यमाणललाटफलकदिव्यालकावलीविराजितम्, प्रबुद्धमुग्धाम्बुजचारुलोचनम, सविभ्रमभ्रूलतम्, उज्ज्वलाधरम्, शुचिस्मितम्, कोमलगण्डम्, उन्नसम्, उदग्रपीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरम्, प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिश्चतुर्भिराजानुविलम्बिभिर्भुजैर्विराजितम्, अतिकोमलदिव्यरेखालंकृताताम्रकरतलम्, दिव्याङ्गुलीयकविराजितम्, अतिकोमलनखावलीविराजितातिरक्ताङ्गुलीभिरलंकृतम्, तत्क्षणोन्मीलितपुण्डरीकसदृशचरणयुगलम्, अतिमनोहरकिरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीतांबरकाञ्चीगुणनूपुरादिभिरत्यन्तसुखस्पर्शैर्दिव्यगन्धैर्भूषणैर्भूषितम्, श्रीमत्या वैजयन्त्या वनमालया विराजितम्, शङ्खचक्रगदासिशार्ङ्गादिदिव्यायुधैस्सेव्यमानम, सङ्कल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादिके श्रीमति विष्वक्सेने न्यस्तसमस्तात्मैश्वर्यम्, वैनतेयादिभिस्स्वभावतो निरस्तसमस्तसांसारिक स्वभावैर्भगवत्परिचर्याकरणयोग्यैर्भगवत्परिचर्यैकभोगैर्नित्यसिद्धैरनन्तैर्यथायोगं सेव्यमानम्, आत्मभोगेन अ[न]नुसंहितपरादिकालदिव्यामलकोमलावलोकनेन विश्वमाह्लादयन्तम्, ईषदुन्मीलितमुखाम्बुजोदरविनिर्गतेन दिव्यनानारविन्दशोभाजनकेन दिव्यगाम्भीर्यौदार्यसौन्दर्यमाधुर्याद्यनवधिकगुणगणविभूषितेन अतिमनोहरदिव्यभावगर्भेण दिव्यलीलालापामृतेन अखिलजनहृदयान्तराण्यापूरयन्तम् भगवन्तम् नारायणम् ध्यानयोगेन दृष्ट्वा [ततो] भगवतो नित्यस्वाम्यम्, आत्मनो नित्यदास्यञ्च यथावस्थितमनुसन्धाय, "कदाऽहं भगवन्तं नारायणं मम कुलनाथं मम कुलदैवतं मम कुलधनं मम भोग्यं मम मातरं मम पितरं मम सर्वं साक्षात्करवाणि चक्षुषा; कदाऽहं भगवत्पादाम्बुजद्वयं शिरसा धारयिष्यामि; कदाहं भगवत्पादाम्बुजद्वयपरिचर्याकरणयोग्यः तदेकभोगस्तत्पादौ परिचरिष्यामि; कदाहं भगवत्पादाम्बुजद्वयपरिचर्याशया निरस्तसमस्तेतरभोगाशः अपगतसमस्तसांसारिकस्वभावः तत्पादाम्बुजद्वयं प्रवेक्ष्यामि; कदा मां भगवान् स्वकीयया अतिशीतलया दृशा अवलोक्य स्निग्धगम्भीरमधुरया गिरा परिचर्यायामाज्ञापयिष्यति" इति भगवत्परिचर्यायाम् आशां वर्धयित्वा, तयैवाशया तत्प्रसादोपबृंहितया भगवन्तमुपेत्य, दूरादेव भगवन्तं शेषभोगे श्रिया सहासीनं वैनतेयादिभिस्सेव्यमानं "समस्तपरिवाराय श्रीमते नारायणाय नमः" इति प्रणम्य, उत्थायोत्थाय पुनः पुनः प्रणम्य अत्यन्तसाध्वसविनयावनतो भूत्वा, भगवत्पारिषदगणनायकैर्द्वारपालैः कृपया स्नेहगर्भया दृशाऽवलोकितः सम्यगभिवन्दितैस्तैरेवानुमतः

भगवन्तमुपेत्य श्रीमता मूलमन्त्रेण " [भगवन्!] माम् ऐकान्तिकात्यन्तिकपरिचर्याकरणाय परिगृह्णीष्व " इति याचमानः प्रणम्यात्मानं भगवते निवेदयेत् ॥ ४ ॥

ततो भगवता स्वयमेवात्मसञ्जीवनेनामर्यादशीलवताऽतिप्रेमान्वितेनावलोकनेनावलोक्य सर्वदेशसर्वकाल-सर्वावस्थोचितात्यन्तशेषभावाय स्वीकृतः अनुज्ञातश्च अत्यन्तसाध्वसविनयावनतः किङ्कुर्वाणः कृताञ्जलिपुटः भगवन्तमुपासीत ॥

ततश्चानुभूयमानभावविशेषः निरतिशयप्रीत्या अन्यत् किञ्चित्कर्तुं द्रष्टुं स्मर्तुमशक्तः पुनरपि शेषभावमेव याचमानः भगवन्तमेव अविच्छिन्नस्रोतोरूपेणावलोकनेनावलोकयन्नासीत ॥ ६ ॥

ततो भगवता स्वयमेवात्मसञ्जीवनेनावलोकनेनावलोक्य सस्मितमाहूय समस्तक्लेशापहं निरतिशयसुखावहम् आत्मीयं श्रीमत्पादारविन्दयुगलं शिरसि कृतं ध्यात्वा अमृतसागरान्तर्निमग्नसर्वावयवः सुखमासीत ॥ ७ ॥

लक्ष्मीपतेर्यतिपतेश्च दयैकधाम्नोर्योऽसौ पुरा समजनिष्ट जगद्धितार्थम् ।
प्राच्यं प्रकाशयतु नः परमं रहस्यं संवाद एष शरणागतिमन्त्रसारः ॥
॥ इति श्रीवैकुण्ठगद्यं समाप्तम् ॥

---

श्री श्रीवत्सचिह्नमिश्रैरनुगृहीतायां पञ्चस्तव्याम्

# ॥ श्रीवैकुण्ठस्तवः ॥

**श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहे । यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥**

यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः रामानुजस्य चरणौ शरणं प्रपद्ये ॥ १ ॥

त्रैविद्यवृद्धजनमूर्धविभूषणं यत् सम्पच्च सात्त्विकजनस्य यदेव नित्यम् ।
यद्वा शरण्यमशरण्यजनस्य पुण्यं तत्संश्रयेम वकुलाभरणाङ्घ्रियुग्मम् ॥ २ ॥

भक्तिप्रभावभवदद्भुतभावबन्धसन्धुक्षितप्रणयसाररसौघपूर्णः ।
वेदार्थरत्ननिधिरच्युतदिव्यधाम जीयात्पराङ्कुशपयोधिरसीमभूमा ॥ ३ ॥

यन्मङ्गलाय महते जगतामुशन्ति त्रैविष्टपान्यपि पदानि यदाश्रयाणि ।
वन्दामहे सरसिजेक्षणमद्वितीयं वेदान्तवेद्यमनिदंप्रथमं महस्तत् ॥ ४ ॥

पीताम्बरं वरदशीतलदृष्टिपातमाजानुलम्बिभुजमायतकर्णपाशम् ।
तन्मेघमेचकमुदग्रविशालवक्षः लक्ष्मीधरं किमपि वस्तु ममाविरस्तु ॥ ५ ॥

यत्तत्त्वमक्षरमदृश्यमगोत्रवर्णमग्राह्यमव्ययमनीदृशमद्वितीयम् ।
ईशानमस्य जगतो यदणोरणीयः तद्वैष्णवं पदमुदारमुदाहरामः ॥ ६ ॥

आम्नायमूर्धनि च मूर्धनि चोर्ध्वपुंसां यद्धाम वैष्णवमभीक्ष्णतरं चकास्ति ।
तन्मादृशामपि च गोचरमेति वाचः मन्ये तदीयमिदमाश्रितवत्सलत्वम् ॥ ७ ॥

जानन्नपीह किल मामनपत्रपिष्णुर्विष्णोः पदप्रणयिनीं गिरमाद्रियेऽहम् ।
न श्वावलीढमपि तीर्थमतीर्थमाहुर्नोदन्यताऽपि च शुना किल लज्जितव्यम् ॥ ८ ॥

देवस्य दैत्यमथनस्य गुणेष्वियत्ता संख्या च वाङ्मनसगोचरमत्यभूताम् ।
अप्येवमण्वपि च तत्र ममार्तिशान्त्यै कीटस्य तृप्यत उदन्वति विप्रुषाऽलम् ॥ ९ ॥

प्रेमार्द्रविह्वलगिरः पुरुषाः पुराणाः त्वां तुष्टुवुर्मधुरिपो ! मधुरैर्वचोभिः ।
वाचो विडम्बितमिदं मम नीचवाचः क्षान्तिस्तु ते सविषया मम दुर्वचोभिः ॥ १० ॥

आज्ञा तवात्रभवती विदिता त्रयी सा तां हि प्रमाणमुपजग्मुरतीन्द्रियेऽर्थे ।
आभासभूयमभियान्त्यपराणि दोषैः एषा तु दोषरहिता महिता पुराणी ॥ ११ ॥

अन्तर्हितो निधिरसि त्वमशेषपुंसां लभ्योऽसि पुण्यपुरुषैरितरैर्दुरापः ।
तत्र त्रयीं सुकृतिनः कृतिनोऽधिजग्मुर्बाह्येषु बाह्यचरितैरितरैर्निपेते ॥ १२ ॥

चित्रं विधेर्विलसितं त्विदमाविरस्ति दुष्टात्मनामयमहो किल दुर्विपाकः ।
यत्केचिदत्रभवतीं श्रुतिमाश्रयन्तोऽप्यर्थे कुदृष्टिविनिविष्टधियो विनष्टाः ॥ १३ ॥

बाह्याः कुदृष्टय इति द्वितयेऽप्यपारं घोरं तमस्समुपयान्ति न हीक्षसे तान् ।
जग्धस्य काननमृगैर्मृगतृष्णिकेप्सोः कासारसत्वनिहतस्य च को विशेषः ॥ १४ ॥

न्यायस्मृतिप्रभृतिभिर्भवता निसृष्टैर्वेदोपबृंहणविधावुचितैरुपायैः ।
श्रुत्यर्थमर्थमिव भानुकरैर्विभेजुः त्वद्भक्तिभावितविकल्मषशेमुषीकाः ॥ १५ ॥

ये तु त्वदङ्घ्रिसरसीरुहभक्तिहीनाः तेषाममीभिरपि नैव यथार्थबोधः ।
पित्तघ्नमञ्जनमनापुषि जातु नेत्रे नैव प्रभाभिरपि शङ्खसितत्वबुद्धिः ॥ १६ ॥

तत्त्वार्थतत्परपरश्शतवेदवाक्यैः सामर्थ्यतः स्मृतिभिरप्यथ तादृशीभिः ।
त्वामेव तत्त्वपरसात्विकसत्पुराणैः देवज्ञधीभिरपि निश्चिनुमः परेशम् ॥ १७ ॥

अन्यत्र तु क्वचन केचिदिहेशशब्दाल्लोकप्रसिद्धिमुपगम्य तमीशमाहुः ।
तैश्च प्रसिद्धिविभवस्य समूलतायै ग्राह्या त्रयी त्वयि तु साऽच्युत ! सम्मुखीना ॥ १८ ॥

यः खल्वणोरणुतरो महतो महीयानात्मा जनस्य जनको जगतश्च योऽभूत् ।
वेदात्मकप्रणवकारणवर्णवाच्यं तं त्वां वयं तु परमेश्वरमामनामः ॥ १९ ॥

आत्मेश्वरोऽसि न परोऽस्ति तवेश्वरोऽन्यः विश्वस्य चाधिपतिरस्य परायणं च ।
नारायणाच्युत ! परस्त्वमिहैक एव ब्रह्मादयोऽपि भवदीक्षणलब्धसत्ताः ॥ २० ॥

नित्यस्समाभ्यधिकवर्जित ऊर्जितश्रीः नित्येऽक्षरे दिवि वसन् पुरुषः पुराणः ।
सत्त्वप्रवर्तनकरो जगतोऽस्य मूलं नान्यस्त्वदस्ति धरणीधर ! वेदवेद्यः ॥ २१ ॥

यं भूतभव्यभवदीशमनीशमाहुरन्तस्समुद्रनिलयं यमनन्तरूपम् ।
यस्य त्रिलोकजननी महिषी च लक्ष्मीः साक्षात्स एव पुरुषोऽसि सहस्रमूर्धा ॥ २२ ॥

सर्वश्रुतिष्वनुगतं स्थिरमप्रकम्प्यं नारायणाह्वयधरं त्वमिवानवद्यम् ।
सूक्तं तु पौरुषमशेषजगत्पवित्रं त्वामुत्तमं पुरुषमीशमुदाजहार ॥ २३ ॥
आनन्दमैश्वरमवाङ्मनसावगाह्यमाम्नासिषुश्शतगुणोत्तरितक्रमेण ।
सोऽयं तवैव नृषु हि त्वमिहान्तरात्मा त्वं पुण्डरीकनयनः पुरुषश्च पौष्णः ॥ २४ ॥
यन्मूलकारणमबुध्यत सृष्टिवाक्यैर्ब्रह्मेति वा सदिति वाऽऽत्मगिराऽथवा तत् ।
नारायणस्त्विति महोपनिषद्ब्रवीति सौबालिकीप्रभृतयोऽप्यनुजग्मुरेनाम् ॥ २५ ॥
ज्योतिः परं परमतत्त्वमथो परात्मा ब्रह्मेति च श्रुतिषु यत्परवस्त्वधीतम् ।
नारायणस्तदिति तद्विशिनष्टि काचिद्विष्णोः पदं परममित्यपरा गृणाति ॥ २६ ॥
सन्तीदृशश्श्रुतिशिरस्सु परस्सहस्रा वाचस्तव प्रथयितुं परमेशितृत्वम् ।
किञ्चेद् न व्यजगणः क्रिमिधातृभेदं क्रामन्जगन्ति निगिरन् पुनरुद्गिरंश्च ॥ २७ ॥
रूपश्रिया परमया परमेण धाम्ना चित्रैश्च कैश्चिदुचितैर्भवतश्चरित्रैः ।
चिह्नैरनिह्नवपरैरपरैश्च कैश्चिन्निश्चिन्वते त्वयि विपश्चित ईशितृत्वम् ॥ २८ ॥
यस्याः कटाक्षणमनुक्षणमीश्वराणामैश्वर्यहेतुरिति सर्वजनीनमेतत् ।
तां श्रीरिति त्वदुपसंश्रयणान्निराहुस्त्वां च श्रियश्श्रियमुदाहुरुदारवाचः ॥ २९ ॥
माया त्वया गुणमयी किल या निसृष्टा सा ते विभो ! किमिव नर्म न निर्मिमीते ।
कौतस्कुताः स्थिरकुतर्कवशेन केचित् सत्यां श्रुतौ च बधिरास्त्वयि तन्महिम्ना ॥ ३० ॥
यः स्थावरक्रिमिपतङ्गमतङ्गजादिष्वन्येषु जन्तुषु सदैव विजायमानः ।
त्वं नित्यनिर्मलनिरञ्जननिर्विकारकल्याणसद्गुणनिधे ! स इतीरितस्तैः ॥ ३१ ॥
त्वद्दृष्टिजुष्टमिदमाविरभूदशेषं नो चेत्कटाक्षयसि नैव भवेत्प्रवृत्तिः ।
स्थातुं च वाञ्छति जगत्तव दृष्टिपातं तेन श्रुतौ जगदिषे हि जगत्त्वमेव ॥ ३२ ॥
एवं भगो ! इह भवत्परतन्त्र एव शब्दोऽपि रूपवदमुष्य चराचरस्य ।
ऐश्वर्यमीदृशमिदं श्रुतिचोदितं ते पापीयसामयमहो त्वयि मोहहेतुः ॥ ३३ ॥
ये त्वत्कटाक्षलवलक्ष्यमिव क्षणं तैरैश्वर्यमीदृशमलभ्यमलम्भि पुंभिः ।
यत्केऽपि सञ्जगरिरे परमेशितृत्वं तेषामपि श्रुतिषु तन्महिमप्रसङ्गात् ॥ ३४ ॥
नित्येषु वस्तुषु भवन्निरपेक्षमेव तत्तत्स्वरूपमिति केचिदिह भ्रमन्तः ।
ऐश्वर्यमत्र तव सावधि सङ्गिरन्ते ब्रूते त्रयी तु निरुपाधिकमीशनं ते ॥ ३५ ॥
इच्छात एव तव विश्वपदार्थसत्ता नित्यं प्रियास्तव तु केचन ते हि नित्याः ।
नित्यं त्वदेकपरतन्त्रनिजस्वरूपा भावत्कमङ्गलगुणा हि निदर्शनं नः ॥ ३६ ॥
विश्वस्य विश्वविधकारणमच्युत ! त्वं कार्यं तदेतदखिलं चिदचित्स्वरूपम् ।
त्वं निर्विकार इति वेदशिरस्सु घोषो निस्सीममेव तव दर्शयतीशितृत्वम् ॥ ३७ ॥

किंसाधनः क निवसन् किमुपाददानः कस्मै फलाय सृजतीश इदं समस्तम् ।
इत्याद्यनिष्ठितकुतर्कमतर्कयन्तः त्वद्वैभवं श्रुतिविदो विदुरप्रतर्क्यम् ॥ ३८ ॥

यत्संवृतं दशगुणोत्तरसप्ततत्त्वैरण्डं चतुर्दशजगद्गृहधातृधाम ।
अण्डानि तत्सुसदृशानि परश्शतानि क्रीडाविधेस्तव परिच्छदतामगच्छन् ॥ ३९ ॥

इच्छाविहारविधये विहितान्यमूनि स्यात्त्वद्विभूतिलवलेशकलायुतांशः ।
या वै न जातु परिणामपदास्पदं सा कालातिगा तव परा महती विभूतिः ॥ ४० ॥

यद्वैष्णवं हि परमं पदमामनन्ति खं वा यदेव परमं तमसः परस्तात् ।
तेजोमयं परमसत्त्वमयं ध्रुवं यदानन्दकन्दमतिसुन्दरमद्भुतं यत् ॥ ४१ ॥

यद्ब्रह्मरुद्रपुरुहूतमुखैर्दुरापं नित्यं निवृत्तिनिरतैस्सनकादिभिर्वा ।
सायुज्यमुज्ज्वलमुशन्ति यदापरोक्ष्यं यस्मात्परं न पदमञ्चितमस्ति किञ्चित् ॥ ४२ ॥

रूपेण सद्गुणगणैः परया समृद्ध्या भावैरुदारमधुरैरपि वा महिम्ना ।
तादृक्तदीदृगिदमित्युपवर्णयन्त्यो वाचो यदीयविभवस्य तिरस्क्रियायै ॥ ४३ ॥

यद्वृद्ध्यपक्षयविनाशमुखैर्विकारैरेतैरसंस्तुतमनस्तमितास्तिशब्दम् ।
यद्गौरवाच्छ्रुतिषु फल्गुफलं क्रियाणाम् आदिष्टमन्यदसुखोत्तरमध्रुवं च ॥ ४४ ॥

निष्कल्मषैर्निहतजन्मजराविकारैर्भूयिष्ठभक्तिविभवैरभवैरवाप्यम् ।
अन्यैरधन्यपुरुषैर्मनसाऽप्यनाप्यं वैकुण्ठनाम तव धाम तदामनन्ति ॥ ४५ ॥

नित्या तत्रान्यनिरपेक्षमहामहिम्नोऽप्येतादृशी निरवधिर्नियता विभूतिः ।
ज्ञानादयो गुणगणास्समतीतसीमाः लक्ष्मीः प्रिया परिजनाः पतगेन्द्रमुख्याः ॥ ४६ ॥

एकस्य येषु हि गुणस्य लवायुतांशः स्यात्कस्यचित्स खलु वाङ्मनसातिगश्रीः ।
ते तादृशोऽत्यवधयस्समतीतसंख्याः त्वत्सद्गुणास्त्वमसि तन्निरपेक्षलक्ष्मीः ॥ ४७ ॥

सर्वस्य चैव गुणतो हि विलक्षणत्वमैश्वर्यतश्च किल कश्चिदुदञ्चितस्स्यात् ।
तत्प्रत्युत त्वयि विभो ! विभवो गुणाश्च सम्बन्धतस्तव भजन्ति हि मङ्गलत्वम् ॥ ४८ ॥

दूरे गुणास्तव तु सत्त्वरजस्तमांसि तेन त्रयी प्रथयति त्वयि निर्गुणत्वम् ।
नित्यं हरे ! निखिलसद्गुणसागरं हि त्वामामनन्ति परमेश्वरमीश्वराणाम् ॥ ४९ ॥

ज्ञानात्मनस्तव तदेव गुणं गृणन्ति तेजोमयस्य हि मणेर्गुण एव तेजः ।
तेनैव विश्वमपरोक्षमुदीक्षसे त्वं रक्षा त्वदीक्षणत एव यतोऽखिलस्य ॥ ५० ॥

तय्युद्यता तव युवत्वमुखैर्गुणौघैरानन्दमेधितमियानिति संनियन्तुम् ।
ते ये शतं त्विति परम्परया प्रवृत्ता नैवेष वाङ्मनसगोचर इत्युदाह ॥ ५१ ॥

एवं तया चतुरया तव यौवनाद्याः सर्वे गुणास्सह समस्तविभूतिभिश्च ।
प्रत्याहृतास्स्युरवधीनवधीरयन्तो वाचामगोचरमहामहिमान एव ॥ ५२ ॥
संवर्तवर्ति निखिलं निरभिज्ञमज्ञं चित्रे च कर्मणि यथार्हमहो ! नियच्छन् ।
सद्यः किमिद्रुहिणभेदमभेदमेतदाविश्चकर्थ सकृदीक्षणदीक्षणेन ॥ ५३ ॥
अस्तं यदुद्यदुपचाय्यपचायि चैवमीशं दरिद्रमथ जङ्गममप्यनिङ्गन् ।
विश्वं विचित्रमविलक्षणवीक्षणेन विक्षोभयस्यनवधिर्बत शक्तिरैशी ॥ ५४ ॥
रूपप्रकारपरिणामकृतव्यवस्थं विश्वं विपर्यसितुमन्यदसच्च कर्तुम् ।
क्षाम्यन्स्वभावनियमं किमुदीक्षसे त्वं स्वातन्त्र्यमैश्वरमपर्यनुयोज्यमाहुः ॥ ५५ ॥
संवर्तसम्भृतकरस्य सहस्ररश्मेरुस्रं तमिस्रयदजस्रविहारि हारि ।
नित्यानुकूलमनुकूलनृणां परेषामुद्वेजनं च तव तेज उदाहरन्ति ॥ ५६ ॥
नैव ह्यवाप्यमनवाप्तमिहास्ति यस्य सत्ताऽपि तस्य तव वीक्षणतः प्रजानाम् ।
सम्पत्तु किंपुनरितो न वदान्यमन्यं मन्ये त्वमेव खलु मन्दिरमिन्दिरायाः ॥ ५७ ॥
पापैरनादिभवसंभववासनोत्थैर्दुःखेषु यः खलु मिमङ्क्षति हन्त जन्तुः ।
तं केवलं नु कृपयैव समुद्धरिष्यन् तद्दुष्कृतस्य ननु निष्कृतिमात्थ शास्त्रैः ॥ ५८ ॥
शास्त्रैरनादिनिधनैः स्मृतिभिस्त्वदीयदिव्यावतारचरितैश्शुभया च दृष्ट्या ।
निःश्रेयसं यदुपकल्पयसि प्रजानां सा त्वत्कृपाजलधितलजवल्गितश्रीः ॥ ५९ ॥
हे हन्त जन्तुषु निरन्तरसन्ततात्मा पाप्मा हि नाम बत ! कोऽयमचिन्त्यशक्तिः ।
यस्त्वत्कृपाजलधिमप्यतिवेलखेलमुलङ्घयत्यकृतभासुरभागधेयान् ॥ ६० ॥
यद्ब्रह्मकल्पनियुतानुभवेऽप्यनाश्यं तत्किल्बिषं सृजति जन्तुरिह क्षणार्धे ।
एवं सदा सकलजन्मसु सापराधं क्षाम्यस्यहो ! तदभिसन्धिविराममात्रात् ॥ ६१ ॥
क्षान्तिस्तवेयमियती महती कथं नु मुह्येदहो ! त्वयि कृताञ्जलिपञ्जरेषु ।
इत्थं स्वतो निखिलजन्तुषु निर्विशेषं वात्सल्यमुत्सुकजनेषु कथं गुणस्ते ॥ ६२ ॥
विश्वं धियैव विरचय्य निचाय्य भूयः सञ्जहुषस्सति समाश्रितवत्सलत्वे ।
आजग्मुषस्तव गजोत्तमबृंहितेन पादं परामम‍ृशुषोऽपि च का मनीषा ? ॥ ६३ ॥
यः कश्चिदेव यदि किञ्चन हन्त जन्तुर्भव्यो भजेत भगवन्तमनन्यचेताः ।
तं सोऽयमीदृश इयानिति वाऽप्यजानन् हे वैनतेयसममप्युररीकरोषि ॥ ६४ ॥
त्वत्साम्यमेव भजतामभिवाञ्छसि त्वं तत्सात्कृतैर्विभवरूपगुणैस्त्वदीयैः ।
मुक्तिं ततो हि परमं तव साम्यमाहुः त्वद्दास्यमेव विदुषां परमं मतं तत् ॥ ६५ ॥

तद्वै तथाऽस्तु कतमोऽयमहो ! स्वभावो याद्यान्यथाविधगुणो भजते भवन्तम् ।
तावांस्तथाविधगुणस्तदधीनवृत्तिस्संश्लिष्यसि त्वमिह तेन समानधर्मा ॥ ६६ ॥

नीलाञ्जनाद्रिनिभमुन्नसमायताक्षमाजानुजैत्रभुजमायतकर्णपाशम् ।
श्रीवत्सलक्षणमुदारगभीरनाभिं पश्येम देव ! शरदश्शतमीदृशं त्वाम् ॥ ६७ ॥

अम्भोरुहाक्षमरविन्दनिभाङ्घ्रियुग्ममाताम्रतामरसरम्यकराग्रकान्ति ।
भृङ्गालकं भ्रमरविभ्रमकायकान्ति पीताम्बरं वपुरदस्तु वयं स्तवाम ॥ ६८ ॥

भ्रूविभ्रमेण मृदुशीतविलोकितेन मन्दस्मितेन मधुराक्षरया च वाचा ।
प्रेमप्रकर्षपिशुनेन विकासिना च संभावयिष्यसि कदा मुखपङ्कजेन ॥ ६९ ॥

वज्राङ्कुशध्वजसरोरुहशंखचक्रमत्सीसुधाकलशकल्पककल्पिताङ्कम् ।
त्वत्पादपद्मयुगलं विगलत्प्रभाभिर्भूयोऽभिषेक्ष्यति कदा नु शिरो मदीयम् ॥ ७० ॥

त्रैविक्रमक्रमकृताक्रमणत्रिलोकमुत्तंसमुत्तममनुत्तमभक्तिभाजाम् ।
नित्यं धनं मम कदा हि मदुत्तमाङ्गमङ्गीकरिष्यति चिरं तव पादपद्मम् ॥ ७१ ॥

उन्निद्रपत्रशतपत्रसगोत्रमन्तर्लेखारविन्दमभिनन्दनमिन्द्रियाणाम् ।
मन्मूर्ध्नि हन्त करपल्लवतल्लजं ते कुर्वन् कदा कृतमनोरथयिष्यसे माम् ॥ ७२ ॥

आङ्गी निसर्गनियता त्वयि हन्त कान्तिर्नित्यं तवालमियमेव तथाऽपि चान्या ।
वैभूषणी भवति कान्तिरलंतरां सा है पुष्कलैव निखिलाऽपि भवद्विभूतिः ॥ ७३ ॥

श्रीवत्सकौस्तुभकिरीटललाटिकाभिः केयूरहारकटकोत्तमकर्णिकाभिः ।
उद्दामदाममणिनूपुरनीविबन्धैर्भान्तं भवन्तमनिमेषमुदीक्षिषीय ॥ ७४ ॥

ऐन्दीवरी क्वचिदपि क्वचनारविन्दी चान्द्रातपी क्वचन च क्वचनाथ हैमी ।
कान्तिस्तवोढपरभागपरस्परश्रीः पर्येत पारणयितुं किमु चक्षुषोर्मे ॥ ७५ ॥

त्वां सेवितं जलजचक्रगदासिशार्ङ्गैस्तार्क्ष्येण सैन्यपतिनाऽनुचरैस्तथाऽन्यैः ।
देव्या श्रिया सह वसन्तमनन्तभोगे भुञ्जीय साञ्जलिरसङ्कुचिताक्षिपक्ष्मा ॥ ७६ ॥

कैङ्कर्यनित्यनिरतैर्भवदेकभोगैर्नित्यैरनुक्षणनवीनरसार्द्रभावैः ।
नित्याभिवाञ्छितपरस्परनीचभावैर्मद्दैवतैः परिजनैस्तव सङ्गसीय ॥ ७७ ॥

यत्किञ्चिदुज्ज्वलमिदं यदुपाख्ययाऽऽहुस्सौन्दर्यमृद्धिरिति यन्महिमांशलेशः ।
नाम्नैव यां श्रियमुशन्ति यदीयधाम त्वामामनन्ति यतमा यतमानसिद्धिः ॥ ७८ ॥

या वै त्वयाऽप्युदधिमन्थनयत्नलभ्या याऽन्तर्हितेति जगदुन्मथनोद्यतोऽभूः ।
या च प्रतिक्षणमपूर्वरसानुबन्धैर्गात्रैर्भवन्तमभिनन्दयते सदैव ॥ ७९ ॥

रूपश्रिया गुणगणैर्विभवेन धाम्ना भावैरुदारमधुरैश्चतुरैश्चरित्रैः ।
नित्यं तवैव सदृशीं श्रियमीश्वरीं तां त्वां चाञ्चितः परिचरेयमुदीर्णभावः ॥ ८० ॥
या बिभ्रती स्थिरचरात्मकमेव विश्वं विश्वम्भरा परमया क्षमया क्षमा च ।
तां मातरं च पितरं च भवन्तमस्य व्युच्छन्तु रात्रय इमा वरिवस्यतो मे ॥ ८१ ॥
भावैरुदारमधुरैर्विविधैर्विलासैर्भ्रूविभ्रमस्मितकटाक्षनिरीक्षणैश्च ।
या त्वन्मयी त्वमपि यन्मय एव सा मां नीला नितान्तमुररीकुरुतामुदारा ॥ ८२ ॥
भावैरनुक्षणमपूर्वरसानुविद्धैरत्यद्भुतैरभिनवैरभिनन्द्य देवीः ।
भृत्यान् यथोचितपरिच्छदिनो यथार्हं संभावयन्तमभितो भगवन् ! भवेयम् ॥ ८३ ॥
हा हन्त हन्त ! हतकोऽस्मि खलोऽस्मि धिङ्मां मुह्यन्नहो ! अहमिदं किमुवाच वाचा ।
त्वामङ्ग ! मङ्गलगुणास्पदमस्तहेयम् आ ! स्मर्तुमेव कथमर्हति मादृगंहः ॥ ८४ ॥
अंहः प्रसह्य विनिगृह्य विशोध्य बुद्धिं व्याधूय विश्वमशिवं जनुषाऽनुबद्धम् ।
आधाय सद्गुणगणानपि नाहमर्हः त्वत्पादयोर्यदहमत्र चिरं निमग्नः ॥ ८५ ॥
जानेऽथ वा किमहमङ्ग ! यदेव सङ्गादङ्गीकरोषि न हि मङ्गलमन्यदस्मात् ।
तेन त्वमेनमुररीकुरुषे जनं चेन्नैवामुतो भवति युक्ततरो हि कश्चित् ॥ ८६ ॥
यन्नाभवाम भवदीयकटाक्षलक्ष्यं संसारगर्तपरिवर्तमतोऽगमाम ।
आगांसि ये खलु सहस्रमजस्रमेव जन्मस्वतन्महि कथं त इमेऽनुकम्प्याः ॥ ८७ ॥
सत्कर्म नैव किल किञ्चन सञ्चिनोमि विद्याऽप्यवद्यरहिता न च विद्यते मे ।
किञ्च त्वदञ्चितपदाम्बुजभक्तिहीनः पात्रं भवामि भगवन् ! भवतो दयायाः ॥ ८८ ॥
किं भूयसा प्रलपितेन यदेव किञ्चित्पापाह्वमल्पमुरु वा तदशेषमेषः ।
जानन्नवा शतसहस्रपराधकृत्वो योऽकार्षमेनमगतिं कृपया क्षमस्व ॥ ८९ ॥
देव ! त्वदीयचरणप्रणयप्रवीणरामानुजार्यविषयीकृतमप्यहो माम् ।
भूयः प्रधर्षयति वैषयिको विमोहो मत्कर्मणः कतरदत्र समानसारम् ॥ ९० ॥
गर्भेषु निर्भरनिपीडनखिन्नदेहः क्षोदीयसोऽतिमहतोऽप्यखिलस्य जन्तोः ।
जन्मान्तराण्यनुविचिन्त्य परस्सहस्राण्यत्राहमप्रतिविधिर्निहतश्चरामि ॥ ९१ ॥
भूयश्च जन्मसमयेषु सुदुर्वचानि दुःखानि दुःखमतिरिच्य किमप्यजानन् ।
मूढोऽनुभूय पुनरेव तु बालभावात् दुःखोत्तरं निजचरित्रममुत्र सेवे ॥ ९२ ॥
भूयांसि भूय उपयन्विविधानि दुःखान्यन्यच्च दुःखमनुभूय सुखभ्रमेण ।
दुःखानुबन्धमपि दुःखविमिश्रमल्पं क्षुद्रं जुगुप्सितसुखं सुखमित्युपासे ॥ ९३ ॥

लोलद्भिरिन्द्रियहयैरपथेषु नीतो दुष्प्रापदुर्भगमनोरथमथ्यमानः।
विद्याधनाभिजनजन्ममदेन कामक्रोधादिभिश्च हतधीर्न शमं प्रयामि ॥ ९४ ॥

लभ्येषु दुर्लभतरेष्वपि वाञ्छितेषु जाता सहस्रगुणतत्प्रतिलम्भनेऽपि।
विघ्नैर्हतेष्वपि च तेषु समूलघातं वर्धिष्णुरेव न तु शाम्यति हन्त तृष्णा ॥ ९५ ॥

त्वत्कीर्तनस्तुतिनमस्कृतिवेदनेषु श्रद्धा न भक्तिरपि शक्तिरथो न चेच्छा।
नैवानुतापमतिरेष्वकृतेषु किंनु भूयानहो ! परिकरः प्रतिकूलपक्षे ॥ ९६ ॥

एतेन वै सुविदितं बत मामकीनं दौरात्म्यमप्रतिविधेयमपारमीश !।
संमूर्च्छतोऽप्यपदमस्मि यतस्त्वदीयनिस्सीमभूमकरुणामृतवीचिवायोः ॥ ९७ ॥

ऐश्वर्यवीर्यकरुणागरिमक्षमाद्यास्स्वामित्वकारणसुहृत्त्वमथो विशेषात्।
सर्वे गुणास्सविषयास्तव मामपारघोराघपूर्णमगतिं निहतं समेत्य ॥ ९८ ॥

त्वत्पादसंश्रयणहेतुषु साधिकारानुयुञ्जतश्चरितकृत्स्नविधींश्च तांस्तान्।
त्वं रक्षसीति महिमा न तवालमेष मां चेदनीदृशमनन्यगतिं न रक्षेः ॥ ९९ ॥

या कर्मणामधिकृतिर्य इहोद्यमस्तेष्वप्येष्वनुष्ठितिरशेषमिदं हि पुंसाम्।
त्वामन्तरेण न कथञ्चन शक्यमाप्तमेवं च तेषु मयि चास्ति न ते विशेषः ॥ १०० ॥

निर्बन्ध एष यदि ते यदशेषवैधसंसेविनो वरद ! रक्षसि नेतरांस्त्वम्।
तर्हि त्वमेव मयि शक्त्यधिकारवाञ्छाः प्रत्यूहशान्तिरितरच्च विधेहि विश्वम् ॥ १०१ ॥

**व्यक्तीकुर्वन्निगमशिरसामर्थमन्तर्निगूढं श्रीवैकुण्ठस्तवमकृत यः श्रेयसे सज्जनानाम्।**
**कूराधीशं गुरुतरदयादुग्धसिन्धुं तमीडे श्रीवत्साङ्कं श्रुतिमतगुरुच्छात्रशीलैकधाम ॥**

इति पञ्चस्तव्यां श्रीवैकुण्ठस्तवः समाप्तः ॥

---

श्री श्रीवत्सचिह्नमिश्रैरनुगृहीतायां पञ्चस्तव्याम्

# ॥ अतिमानुषस्तवः ॥

**श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहे। यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥**

अतिमानुषशीलवृत्तवेषैरतिवृत्तामरविक्रमप्रतापैः। अतिलङ्घितसर्वलोकसाम्यं वरये वैष्णववैभवावतारम् ॥ १ ॥

श्रेयः किरन्तु किरणाश्चरणारविन्दनिष्यन्दमानमकरन्दरसौघदेश्याः।
तज्ज्ञाः श्रुतेर्मधुन उत्स इति प्रतीता माङ्गल्यरङ्गनिलयस्य परस्य धाम्नः ॥ २ ॥

श्रीमत्पराङ्कुशमुनीन्द्रमनोनिवासात्तज्ज्ञानुरागरसमज्जनमञ्जसाऽऽप्य।
अद्याप्यनारततदुत्थितरागयोगं श्रीरङ्गराजचरणाम्बुजमुन्नयामः ॥ ३ ॥

वज्रध्वजाङ्कुशसुधाकलशातपत्रपङ्केरुहाङ्कपरिकर्मपरीतमन्तः ।
आपादपङ्कजविशृङ्खलदीप्रमौलेश्श्रीरङ्गिणश्चरणयोर्युगमाश्रयामः ॥ ४ ॥
श्रीरङ्गराजचरणौ प्रणुमो ययोः खल्वेकस्त्रिविक्रमविधौ वसुधामशेषाम् ।
व्यक्रंस्त साचलकुलामपि विप्रकीर्णस्थूलावलग्नसिकतामिव निर्नतोच्चम् ॥ ५ ॥
ज्ञानं बलं विपुलमीशनवीर्यशक्तितेजांसि च त्रियुगभूयमुपागतानि ।
पूर्णानि षट् च परिगृह्य भवंश्चतुर्धा भक्तं जनं त्वमनुजग्रहिथानुरागात् ॥ ६ ॥
एकान्तमङ्गलगुणास्पदमस्तहेयं नित्यं पदं तव यतस्तत एव देव ! ।
आम्नायते तदिह विश्वविरूपरूपं तेनैव नन्विदमशब्दमरूपमाहुः ॥ ७ ॥
शब्दादिहेय इह गोचर इन्द्रियाणां तत्प्रत्यनीकविभवस्त्वमतीन्द्रियोऽसि ।
तेनैव ते न बत दर्शनमस्ति किञ्चिद्वाचो धियश्च तत एव न गोचरोऽसि ॥ ८ ॥
एवं स्थिते त्वदुपसंश्रयणाभ्युपायो मानेन केनचिदलप्स्यत नोपलब्धुम् ।
नो चेदमर्त्यमनुजादिषु योनिषु त्वमिच्छाविहारविधिना समवातरिष्यः ॥ ९ ॥
शीलः क एष तव हन्त दयैकसिन्धो ! क्षुद्रे पृथग्जनपदे जगदण्डमध्ये ।
क्षोदीयसोऽपि हि जनस्य कृते कृती त्वमत्रावतीर्य ननु लोचनगोचरोऽभूः ॥ १० ॥
यं पातकात्सुमहतोऽप्युदधारयस्त्वं त्वत्पादवारिपरिपूतशिराश्च योऽभूत् ।
तं वन्दसे किल ततश्च वरं वृणीषे क्रीडाविधिर्बत ! विलक्षणलक्षणस्ते ॥ ११ ॥
क्रीडाविधेः परिकरस्तव या तु माया सा मोहनी न कतमस्य तु हन्त ! जन्तोः ।
हे मर्त्यसिंहवपुषस्तव तेजसोंशे शम्भुर्भवन् हि शरभश्शलभो बभूव ॥ १२ ॥
यस्यात्मतां त्रिपुरभङ्गविधावधास्त्वं त्वच्छक्तितेजितशरो विजयी च योऽभूत् ।
दक्षक्रतौ तु किल तेन विनिर्जितस्त्वं युक्तो विधेयविषयेषु हि कामचारः ॥ १३ ॥
मुग्धशिशुर्वटदले शयितोऽतितन्वा तन्वा जगन्ति बिभृषे सविकासमेव ।
ऐशीमिमां तु तव शक्तिमतर्कितव्यामव्याजतः प्रथयसे किमिहावतीर्णः ॥ १४ ॥
ब्रह्मेशमध्यगणना गणनाऽर्कपङ्क्तौ इन्द्रानुजत्वमदितेस्तनयत्वयोगात् ।
इक्ष्वाकुवंशयदुवंशजनिश्च हन्त श्लाघ्यान्यमून्यनुपमस्य परस्य धाम्नः ॥ १५ ॥
त्वन्निर्मिता जठरगा च तव त्रिलोकी किं भिक्षणादियमृते भवता दुरापा ।
मध्ये कदा तु न विचक्रमिषे जगच्चेत् त्वद्विक्रमैः कथमिव श्रुतिरञ्जिता स्यात् ॥ १६ ॥
पृच्छामि किञ्चन यदा किल राघवत्वे मायामृगस्य वशगो मनुजत्वमौग्ध्यात् ।
सीतावियोगविवशो न च तद्गतिज्ञः प्रादास्तदा परगतिं हि कथं खगाय ॥ १७ ॥

अक्षुण्णयोगपथमग्रचहतं जटायुं तिर्यञ्चमेव बत ! मोक्षपथे नियोक्तुम् ।
शक्नोषि वेत्सि च यदा स तदा कथं त्वं देवीमवाप्तुमनलं व्यथितो विचिन्वन् ॥ १८ ॥

सालान् हि सप्त सगिरीन्सरसातलान्यानेकेषुमन्दजवतो निरपत्रयस्त्वम् ।
तेष्वेकविव्यथनखिन्नकपिप्रणुन्नं शाखामृगं मृगयसे स्म कथं सहायम् ॥ १९ ॥

दासस्सखा समभवत्तव यः कपीन्द्रस्तद्विद्विषं कपिममर्षवशाज्जिघांसुः ।
त्वत्स्नेहविक्लबधियं तमिमं कपीन्द्रं विस्रम्भयन् सपदि सालगिरीनविध्यः ॥ २० ॥

यद्वा मृगं मृगयुवन्मृगयापथेन छन्नो जघन्थ न तु शत्रुवदाभिमुख्यात् ।
तद्युक्तमेव तव राघववंशजस्य तिर्यक्षु नैव हि विपक्षतयोपचारः ॥ २१ ॥

मानुष्यकं चरितमाचरितुं प्रवृत्तो देवातिगं चरितमङ्ग ! किमङ्गयकार्षीः ।
यत्सागरे बत बबन्धिथ नाथ ! सेतुं शैलैः प्लवङ्गमसमिङ्गितसंप्रणुन्नैः ॥ २२ ॥

यो विक्रमेण मनुजत्वविभूषणेन देवं वरं वरुणराजमज ! व्यजेष्टाः ।
कृत्वोपदां दशरथं विधिरुद्रमुख्यैर्देवैस्स्तुतश्च स किलेन्द्रजिता जितोऽसि ॥ २३ ॥

अब्धिं न तेरिथ न जिग्यिथ राक्षसेन्द्रं नैवास्य जज्ञिथ यदा च बलाबलं त्वम् ।
निस्संशयस्सपदि तस्य पदेऽभ्यषिञ्चस्तस्यानुजं कथमिदं हि विभीषणं च ॥ २४ ॥

त्वं दक्षिणस्य निवसन्नुदधेस्तटेऽपि दूरान्तरोत्तरपयोधिमहान्तरीपे ।
दैत्यान्निजैकशरपारणयन् किमेतां लङ्कां स्थितोऽत्र कुरुषे किल न स्म भस्म ॥ २५ ॥

एतत्कथं कथय यन्मथितस्त्वयाऽसौ हित्वा स्वभावनियमं प्रथितं त्रिलोक्याम् ।
अश्वाप्सरोविषसुधाविधुपारिजातलक्ष्म्यात्मना परिणतो जलधिर्बभूव ॥ २६ ॥

यत्तादृशागसमरिं रघुवीर ! वीक्ष्य विश्रम्यतामिति मुमोचिथ मुग्धमाजौ ।
कोऽयं गुणः कतरकोटिगतः कियान्वा कस्य स्तुतेः पदमहो बत ! कस्य भूमिः ॥ २७ ॥

यल्लक्ष्मणस्त्वदनुजो रिपुशक्तिमुग्धश्शत्रोर्गुरुर्हनुमतस्तु लघुर्बभूव ।
एतेन वै सुविदितोऽभवदिन्द्रशत्रोर्मायास्त्रबन्धननिबन्धनजो विमोहः ॥ २८ ॥

हा हन्त हन्त ! भवतश्चरणारविन्दद्वन्द्वं कदा नु भविता विषयो ममाक्ष्णोः ।
योऽहं निरर्गलविनिर्गलदन्धकारैर्वृक्षैस्तृणैश्च सुलभं समयं व्यतीतः ॥ २९ ॥

वंशं रघोरनुजिघृक्षुरिहावतीर्णो दिव्यैर्ववर्षिथ तथाऽत्र भवद्गुणौघैः ।
त्वत्सन्निधिप्रभवशैत्यजुषो यथा हि वृक्षाश्च तान्तिमलभन्त भवद्वियोगे ॥ ३० ॥

ये धर्ममाचरितुमभ्यसितुं च योगं बोद्धुं च किञ्चन न जात्वधिकारभाजः ।
तेऽपि त्वदाचरितभूतलबन्धगन्धाद्बन्धातिगाः परगतिं गमितास्तृणाद्याः ॥ ३१ ॥

तादृग्गुणो ननु बभूविथ राघवत्वे यस्तावकं चरितमन्वहमन्वभुङ्क्त ।
सोऽत्रैव हन्त हनुमान् परमां विमुक्तिं बुद्ध्याऽवधूय चरितं तव सेवतेऽसौ ॥ ३२ ॥

यत्त्वं कृतागसमपि प्रणतिप्रसक्तं तं वायसं परमया दययाऽक्षमिष्ठाः ।
तेनैव मादृशजनस्य महागसोऽपि युक्तं समाश्वसनमित्युपधारयामि ॥ ३३ ॥

सा पूतना शकटमर्जुनयोश्च युग्मं बाल्योचितेऽन्यपरचेष्टितविस्फुलिङ्गे ।
यस्यालभन्त शलभत्वमहो निगूढस्स त्वं व्रजे ववृधिषे किल कंसभीत्या ॥ ३४ ॥

पश्यत्सु सूरिषु सदा परमं पदं ते देव्या श्रिया सह वसन्परया विभूत्या ।
योगेन योगनिरतैः परिमृग्यमाणः किं त्वं व्रजेषु नवनीतमहो ! व्यमुष्णाः ॥ ३५ ॥

यं दुर्ग्रहं सुमनसो मनसाऽपि नित्यं बन्धच्छिदं परममीशमुदाहरन्ति ।
दाम्ना निबद्ध इति शुश्रुम तं भवन्तं नालं बभूविथ बत ! श्लथनाय तस्य ॥ ३६ ॥

ऐशं हि शैशवमपि व्यतिवेलखेलं यत्पूतना शकटमर्जुनयोश्च युग्मम ।
बाल्योचितान्यपरसाचिविचेष्टितेन हन्तालभन्त शलभायितमोजसस्ते ॥ ३७ ॥

सत्येव गव्यनिवहे निजधाम्नि भूम्ना पर्यन्तसद्मसु किमर्थमचूचुरस्त्वम् ।
मुष्णंश्च किं व्यजघटो घटशेषमग्रे गोपीजनस्य परिहासपदं किमासीः ? ॥ ३८ ॥

यन्नाम नाथ नवनीतमचूचुरस्त्वं तच्छादनाय यदि ते मतिराविरासीत् ।
किं मुग्ध ! दिग्धममुना करपल्लवं ते गात्रे प्रमृज्य निरगाः किल निर्विशङ्कः ॥ ३९ ॥

त्वामन्यगोपगृहगव्यमुषं यशोदा गुर्वीं त्वदीयमवमानममृष्यमाणा ।
प्रेम्णाऽथ दामपरिणामजुषा बबन्ध तादृङ् न ते चरितमार्यजनास्सहन्ते ॥ ४० ॥

मात्रा यदि त्वमसि दामनि संनिबद्धस्तच्छाविणामुदितचाक्षुषनिर्झराणाम् ।
बध्नासि हन्त हृदयं भगवन्कुतस्तत्सर्वो हि वश्यविषये विवृणोति वीर्यम् ॥ ४१ ॥

कान्तालकान्तममलं कमलायताक्षमुद्भ्रूविलासमुदितस्मितमुन्नसं च ।
वक्त्रं वहन् परम ! गोपगृहेषु किं त्वं गोपीमनांसि नवनीतमुताभ्यमोषीः ॥ ४२ ॥

सर्वं गुणाय गुणिनामिति सत्यमेतद्यत्खल्वितरजने मलिनत्वहेतुः ।
यद्गोपवेषविनिषेवणमुत्तमं ते गोपालनं च गणयन्ति गुणं गुणेषु ॥ ४३ ॥

गोपालपोतकतया निभृतं धरित्रीं आवस्तुकाम इव सन्नपि बाल्यलौल्यात् ।
ऐन्द्रं निहत्य मखमद्रिमथो दधानः किं तस्थिषे सुरगणाय सवासवाय ॥ ४४ ॥

वेणुक्वणप्रणयिनि त्वयि लोकनाथ ! बृन्दावनं चरणसञ्चरणैः पुनाने ।
भावास्तदा वनभुवः किल कीदृशस्ते त्वद्गीतसिक्तसिकतासु वसुन्धरासु ॥ ४५ ॥

धन्यैश्श्रुतं तदिह तावकरासकाले गीतेन येन हि शिलास्सलिलांबभूवुः ।
पञ्चापि किञ्च परिवृत्तगुणानि भूतान्युर्वीकृशानुमरुदम्बरशम्बराणि ॥ ४६ ॥

तेभ्यः कृती न किल कश्चिदिहास्ति ये वै रासोत्सवोत्सुकधियस्तव काननान्ते ।
वेणुस्वनस्तुतरसौघपरिप्लुतान्ते स्वे सृक्कणी रसनया लिलिहुर्भुजङ्गाः ॥ ४७ ॥

अम्भोदनीलमरविन्ददलायताक्षं पिञ्छावतंसमुररीकृतवेणुपाणिम् ।
त्वां गोपवेषपरिकर्मितकायकान्तिं धन्यास्तदा ददृशुरुन्मथितान्यभावाः ॥ ४८ ॥

गोवर्धनो गिरिवरो यमुना नदी सा बृन्दावनं च मधुरा च पुरी पुराणी ।
अद्यापि हन्त सुलभाः कृतिनां जनानामेते भवच्चरणचारजुषः प्रदेशाः ॥ ४९ ॥

बृन्दावने स्थिरचरात्मककीटदूर्वापर्यन्तजन्तुनिचये बत! ये तदानीम् ।
नैवालभामहि जनिं हतकास्त एते पापाः पदं तत्र कदा पुनराश्रयामः ॥ ५० ॥

हा जन्म तासु सिकतासु मया न लब्धे रासे त्वया विरहिताः किल गोपकन्याः ।
यास्तावकीनपदपङ्क्तिजुषोऽजुषन्त निक्षिप्य तत्र निजमङ्गमनङ्गतप्तम् ॥ ५१ ॥

आचिन्वतः कुसुममङ्घ्रिसरोरुहं ते ये भेजिरे बत! वनस्पतयो लता वा ।
अद्यापि तत्कुलभुवः कुलदैवतं मे बृन्दावनं मम धियं च सनाथयन्ति ॥ ५२ ॥

यत्त्वत्प्रियं तदिह पुण्यमपुण्यमन्यन्नान्यत्तयोर्भवति लक्षणमत्र जातु ।
धूर्तायितं तव हि यत्किल रासगोष्ठ्यां तत्कीर्तनं परमपावनमामनन्ति ॥ ५३ ॥

या कंसमुख्यनृपकीटनिवर्हणोत्था सा निर्जितत्रिजगतस्तव नैव कीर्तिः ।
गोपालनादि यदिदं भवदीयकर्मैत्यार्द्रीकरोति विदुषां हृदयं तदेतत् ॥ ५४ ॥

गोपालवेषपरिकर्म परावरेशं यन्नाम धाम परमं तमसः परस्तात् ।
तत्पिञ्छलाञ्छनसुदामकृतोपवीतं गोधूलिधूसरितकुन्तलमन्तरास्ताम् ॥ ५५ ॥

यद्वै जरासुतभयाद्विपलायथास्त्वं तच्चेन्मनुष्यचरितानुविधानजं ते ।
तर्हि त्रिलोकगुरुमीश्वरमीश्वराणां बाणाहवे किमिति शम्भुमजृम्भयस्त्वम् ॥ ५६ ॥

जातं कुतस्तदकृतज्ञविचेष्टितं ते पुत्रीयया किल वरं वव्रुवे वृषाङ्कात् ।
अक्षेषु सक्तमतिना च निरादरेण वाराणसीं हरपुरीं भवता विदग्धा ॥ ५७ ॥

सञ्जीवयन्नपि मृतं सुतमुत्तरायास्सान्दीपनेश्चिरमृतं सुतमानयंश्च ।
धाम्नो निजाद्द्विजसुतान्पुनरानयन्वा स्वामेव तां तनुमहो! कथमानयस्त्वम् ॥ ५८ ॥

अद्यापि नास्म्युपरतस्त्रिविधापचारात्पापः परे निपतितोऽस्मि तमस्यपारे ।
एतादृशोऽहमगतिर्भवतो दयायाः पात्रं त्वदीयचरणौ शरणं प्रपद्ये ॥ ५९ ॥

विस्रम्भणं त्वयि न यद्यपि मेऽस्ति नापि श्रद्धा यथोक्तवचनार्थगता तथाऽपि ।
वाचं त्विमां सकृदथाप्यसकृन्मयोक्तां सत्यां कुरुष्व दययैव दयैकसिन्धो ॥ ६० ॥

पापीयसोऽपि शरणागतशब्दभाजो नोपेक्षणं मम तवोचितमीश्वरस्य ।
त्वज्ज्ञानशक्तिकरुणासु सतीषु नेह पापं पराक्रमितुमर्हति मामकीनम् ॥ ६१ ॥

॥ इति पञ्चस्तव्याम् अतिमानुषस्तवः समाप्तः ॥

श्री श्रीवत्सचिह्नमिश्रैरनुगृहीतायां पञ्चस्तव्याम्

## ॥ सुन्दरबाहुस्तवः ॥

श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहे । यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥

श्रीमन्तौ हरिचरणौ समाश्रितोऽहं श्रीरामावरजमुनीन्द्रलब्धबोधः ।
निर्भीकस्तत इह सुन्दरोरुबाहुं स्तोष्ये तच्चरणविलोकनाभिलाषी ॥ १ ॥

सुन्दरायतभुजं भजामहे वृक्षषण्डमयमद्रिमास्थितम् । यत्र सुप्रथितनूपुरापगातीर्थमर्थितफलप्रदं विदुः ॥ २ ॥

क्वचित्त्वरितगामिनी क्वचन मन्दमन्दालसा क्वचित्स्खलितविह्वला क्वचन फेनिला सारवा ।
पतन्त्यपि किल क्वचिद्व्रजति नूपुराह्वा नदी सुसुन्दरभुजाह्वयं मधु निपीय मत्ता यथा ॥ ३ ॥

उदधिगमन्दराद्रिमथिमन्थनलब्धपयोमधुररसेन्दिराह्वसुधसुन्दरदोःपरिघम् ।
अशरणमादृशात्मशरणं शरणार्थिजनप्रवणधियं भजेम तरुषण्डमयाद्रिपतिम् ॥ ४ ॥

शशधररिङ्खणाढ्यशिखमुच्छिखरप्रकरं तिमिरनिभप्रभूततरुषण्डमयं भ्रमदम् ।
वनगिरिमावसन्तमुपयामि हरिं शरणं भिदुरितसप्तलोकसुविशृङ्खलशाङ्खरवम् ॥ ५ ॥

यत्तुङ्गशृङ्गविनिषङ्गिसुराङ्गनानां न्यस्तोर्ध्वपुण्ड्रमुखमण्डनमण्डितानाम् ।
दर्पण्यभूद्धृतमपाङ्कशशाङ्कपृष्ठं तद्धाम सुन्दरभुजस्य महान् वनाद्रिः ॥ ६ ॥

यदीयशिखरागतां शशिकलां तु शाखामृगा निरीक्ष्य हरशेखरीभवनमामृशन्तस्ततः ।
स्पृशन्ति न हि देवतान्तरसमाश्रितेति स्फुटं स एष सुमहातरुव्रजगिरिर्गृहं श्रीपतेः ॥ ७ ॥

सुन्दरदोर्दिव्याज्ञालम्भनकातरवशानुयायिनि करिणि । प्रणयजकलहसमाधिर्यत्र वनाद्रिस्स एष सुन्दरदोष्णः ॥८॥

स एष सौन्दर्यनिधेर्धृतश्रियो वनाचलो नाम सुधाम यत्र हि ।
भुजङ्गराजस्य कुलस्य गौरवान्न खण्डिताः कुण्डलिनश्शिखण्डिभिः ॥ ९ ॥

वृषगिरिरयमच्युतस्य यस्मिन् स्वमतमलङ्घयितुं परस्परेभ्यः ।
खगपतिचरणौ खगाश्शपन्ते भुजगपतेर्भुजगाश्च सर्व एव ॥ १० ॥

हरिकुलमखिलं हनूमदङ्घ्रिं स्वकुलपजाम्बवतस्तथैव भल्लाः ।
निजकुलपजटायुषश्च गृध्राः स्वकुलपतेश्च गजा गजेन्द्रनाम्नः ॥११॥

वकुलधरसरस्वतीविषक्तस्वररसभावयुतासु किन्नरीषु ।
द्रवति दृषदपि प्रसक्तगानास्विह वनशैलतटीषु सुन्दरस्य ॥ १२ ॥

भृङ्गी गायति हंसतालनिभृतं तत्पुष्णती कोकिलाऽप्युद्गायत्यथ वल्लितल्लजमुखादास्रं मधु स्यन्दते ।
निष्पन्दस्तिमिताः कुरङ्गततयश्शीतं शिलासैकतं सायाह्ने किल यत्र सुन्दरभुजस्तस्मिन्वनक्ष्माधरे ॥ १३ ॥

पीताम्बरं वरदशीतलदृष्टिपातमाजानुलम्बिभुजमायतकर्णपाशम् ।
श्रीमन्महावनगिरीन्द्रनिवासदीक्षं लक्ष्मीधरं किमपि वस्तु ममाविरस्तु ॥ १४ ॥

जनिजीवनाप्ययविमुक्तयो यतो जगतामिति श्रुतिशिरस्सु गीयते ।
तदिदं समस्तदुरितैकभेषजं वनशैलसम्भवमहं भजे महः ॥ १५ ॥

सद्ब्रह्मात्मपदैस्त्रयीशिरसि यो नारायणोक्त्या तथा व्याख्यातो गतिसाम्यलब्धविषयानन्यत्वबोधोज्ज्वलैः ।
निस्तुल्याधिकमद्वितीयममृतं तं पुण्डरीकेक्षणं प्रारूढश्रियमाश्रये वनगिरेः कुञ्जोदितं सुन्दरम् ॥ १६ ॥

पतिं विश्वस्यात्मेश्वरमिति परं ब्रह्म पुरुषः परं ज्योतिस्तत्वं परमिति च नारायण इति ।
श्रुतिर्ब्रह्मेशादींस्तदुदितविभूतींस्तु गृणती यमाहारूढश्रीस्स वनगिरिधामा विजयते ॥ १७ ॥

पृथिव्याद्यात्मान्तं नियमयति यस्तत्त्वनिकरं तदन्तर्यामी तद्वपुरविदितस्तेन भगवान् ।
स एष स्वैश्वर्यं नविजहदशेषं वनगिरिं समध्यासीनो नो विशतु हृदयं सुन्दरभुजः ॥ १८ ॥

प्रत्यगात्मनि कदाऽप्यसंभवद्भूमभूमिमभिवक्ति यं श्रुतिः । तं वनाद्रिनिलयं सुसुन्दरं सुन्दरायतभुजं भजामहे ॥ १९ ॥

वन्देय सुन्दरभुजं भुजगेन्द्रभोगसक्तं महावनगिरिप्रणयप्रवीणम् ।
यं तं विदुर्दहरमष्टगुणोपजुष्टम् आकाशमौपनिषदीषु सरस्वतीषु ॥ २० ॥

यत्स्वायत्तस्वरूपस्थितिकृतिकनिजेच्छानियाम्यस्वशेषानन्ताशेषप्रपञ्चस्तत इह चिदिवाचिद्वपुर्वाचिशब्दैः ।
विश्वेशशब्दैः प्रवाच्यो हतवृजिनतया नित्यमेवानवद्यस्तं वन्दे सुन्दराह्वं वनगिरिनिलयं पुण्डरीकायताक्षम् ॥

गुणजं गुणिनो हि मङ्गलत्वं प्रमितं प्रत्युत यत्स्वरूपमेत्य । तमनन्तसुखावबोधरूपं विमलं सुन्दरबाहुमाश्रयामः ॥

अतिपतितावधिस्वमहिमानुभवप्रभवत्सुखकृतनिस्तरङ्गजलधीयितनित्यदशम् ।
प्रतिभटमेव हेयनिकरस्य सदाऽप्रतिमं हरिमिह सुन्दराह्वमुपयामि वनाद्रितटे ॥ २३ ॥

सदा षाड्गुण्याख्यैः पृथुलबलविज्ञानशकनप्रभावीर्यैश्वर्यैरवधिविधुरैरेधितदशम् ।
द्रुमस्तोमक्ष्माभृत्परिसरमहोद्यानमुदितं प्रपद्येऽध्यारूढश्रियमिममहं सुन्दरभुजम् ॥ २४ ॥

सौशील्याश्रितवत्सलत्वमृदुतासौहार्दसाम्यार्जवैः धैर्यस्थैर्यसुवीर्यशौर्यकृतितागाम्भीर्यचातुर्यकैः ।
सौन्दर्यान्वितसौकुमार्यसमतालावण्यमुख्यैर्गुणैर्देवः श्रीतरुषण्डशैलनिलयो नित्यं स्थितस्सुन्दरः ॥ २५ ॥

येष्वेकस्य गुणस्य विप्रुडपि वै लोकोत्तरं स्वाश्रयं कुर्यात्तादृशवैभवैरगणितैर्निस्सीमभूमान्वितैः ।
नित्यैर्दिव्यगुणैस्ततोऽधिकशुभत्वैकास्पदात्माश्रयैरिद्धं सुन्दरबाहुमस्मि शरणं यातो वनाद्रीश्वरम् ॥ २६ ॥

सदा समस्तं जगदीक्षते हि यः प्रत्यक्षदृष्ट्या युगपद्ध्रुवा स्वतः ।
स ईदृशज्ञाननिधिर्निधिस्तु नर्स्सिहाद्रिकुञ्जेषु चकास्ति सुन्दरः ॥ २७ ॥

ऐश्वर्यतेजोबलवीर्यशक्तयः कीदृग्विधास्सुन्दरबाहुसंश्रयाः ।
योऽसौ जगज्जन्मलयस्थितिक्रियास्सङ्कल्पतोऽल्पादुपकल्पयत्यजः ॥ २८ ॥

यत्कल्पायुतभोगतोऽपि कृशतां यायान्न तावत्फलं येष्वेकस्य तथाविधैस्सततजैरंहोभिरुत्सीमभिः ।
अस्तादाविह संसृतावुपचितैश्छन्नं सुसन्नं जनं संनत्या क्षमते क्षणाद्वनगिरिप्रस्थप्रियस्सुन्दरः ॥ २९ ॥

यज्जातीयो यादृशो यत्स्वभावः पादच्छायां संश्रितो योऽपि कोऽपि ।
तज्जातीयस्तादृशस्तत्स्वभावः श्लिष्यत्येनं सुन्दरो वत्सलत्वात् ॥ ३० ॥

निहीनो जात्या वा भृशमकुशलैर्वा स्वचरितैः पुमान्वै यः कश्चिद्बहुतृणमपि स्यादगुणतः ।
भजन्तं तं पश्येद्भुजगपतिना तुल्यमपि यो वनाद्रिप्रस्थस्थस्स मम शरणं सुन्दरभुजः ॥ ३१ ॥

एकैकमङ्गलगुणानुभवाभिनन्दमीदृक्त्वियानिति च सुन्दरदोष्णि कृष्णे ।
ते ये शतंत्विति नियन्तुमनाश्श्रुतिर्हि नैवैष वाङ्मनसगोचर इत्युदाह ॥ ३२ ॥

अब्जपादमरविन्दलोचनं पद्मपाणितलमञ्जनप्रभम् । सुन्दरोरुभुजमिन्दिरापतिं वन्दिषीय वरदं वनाद्रिगम् ॥ ३३ ॥

कनकमरतकाञ्जनद्रवाणां मथनसमुत्थितसारमेलनोत्थम् । जयति किमपि रूपमस्य तेजो वनगिरिनन्दनसुन्दरोरुबाहोः ॥

किंतु स्वयं स्वात्मविभूषणं भवन्नसावलङ्कार इतीरितो जनैः ।
वर्धिष्णुबालद्रुमषण्डमण्डितं वनाचलं वा परितः प्रसाधयन् ॥ ३५ ॥

सुखस्पर्शैर्नित्यैः कुसुमसुकुमाराङ्गसुखदैः सुसौगन्ध्यैर्दिव्याभरणगणदिव्यायुधगणैः ।
अलङ्कार्यैस्सर्वैर्निगदितमलङ्कार इति यस्समाख्यानं धत्ते स वनगिरिनाथोऽस्तु शरणम् ॥ ३६ ॥

मकुटमकुटमालोत्तंसचूडाललामस्वलकतिलकमालाकुण्डलैस्सोर्ध्वपुण्ड्रैः ।
मणिवरवनमालाहारकेयूरकण्ठ्यैस्तुलसिकटककाञ्चीनूपुराद्यैश्च भूषैः ॥ ३७ ॥

असिजलजरथाङ्गैश्शार्ङ्गकौमोदकीभ्यामगणितगुणजालैरायुधैरप्यथान्यैः ।
सततविततशोभं पद्मनाभं वनाद्रेरुपवनसुखलीलं सुन्दरं वन्दिषीय ॥ ३८ ॥

आजानजस्वगतबन्धुरगन्धलुब्धभ्राम्यद्विदग्धमधुपालिसदेशकेशम् ।
विश्वाधिराज्यपरिबर्हकिरीटराजं है सुन्दरस्य बत! सुन्दरमुत्तमाङ्गम् ॥ ३९ ॥

अन्धं तमस्तिमिरनिर्मितमेव यत्स्यात्तत्सारसाधितसुतन्त्वतिवृत्तवार्तम् ।
ईशस्य (केसरिगिरे) केशवहरेरलकालिजालं तत्तुल्यकुल्यमधुपाढ्यमहावनस्य ॥ ४० ॥

जुष्टाष्टमीकज्वलदिन्दुसंनिभं धृतोर्ध्वपुण्ड्रं विलसद्विशेषकम् ।
भूम्ना ललाटं विमलं विराजते वनाद्रिनाथस्य समुच्छ्रितश्रियः ॥ ४१ ॥

सुचारुचापद्वयविभ्रमं भ्रुवोर्युगं सुनेत्राह्वसहस्रपत्रयोः । उपान्तगं वा मधुपावलीयुगं विराजते सुन्दरबाहुसंश्रयम् ॥

अदीर्घमप्रेमदुघं क्षणोज्ज्वलं नचोरमन्तःकरणस्य पश्यताम् ।
अनुब्जमब्जं नु कथं निदर्शनं वनाद्रिनाथस्य विशालयोर्दृशोः ॥ ४३ ॥

प्रश्चोतत्प्रेमसारामृतरसचुलकप्रक्रमप्रक्रियाभ्यां विक्षिप्तालोकितोर्मिप्रसरणमुषितस्वान्तकान्ताजनाभ्याम् ।
विश्वोत्पत्तिप्रवृत्तिस्थितिलयकरणैकान्तशान्तक्रियाभ्यां देवोऽलङ्कारनामा वनगिरिनिलयो वीक्षतामीक्षणाभ्याम् ॥ ४४॥

प्रेमामृतौघपरिवाहिमहाक्षिसिन्धुमध्ये प्रबद्धसमुदञ्चितसेतुकल्पा ।
ऋज्वी सुसुन्दरभुजस्य विभाति नासा कल्पद्रुमाङ्कुरनिभा वनशैलभर्तुः ॥ ४५ ॥

व्याभाषिताभ्यधिकनन्दनभन्दनर्द्धिमन्दस्मितामृतपरिस्रवसंस्तवाढ्यम् ।
आभाति विद्रुमसमाधरमास्यमस्य देवस्य सुन्दरभुजस्य वनाद्रिभर्तुः ॥ ४६ ॥

यशोदाङ्गुल्यग्रोन्नमितचुबुकाघ्राणमुदितौ कपोलावद्यापि ह्यनुपरततद्धर्षगमकौ ।
विराजेते विष्वग्विततसहकारासवरसप्रमाद्यद्भृङ्गाढ्यद्रुमवनगिरेस्सुन्दरहरेः ॥ ४७ ॥

व्यालम्बिकुण्डलमुदग्रसुवर्णपुष्पनिष्पन्नकल्पलतिकायमलानुकारम् ।
यत्कर्णपाशयुगलं निगलं धियां नस्सोऽयं सुसुन्दरभुजो वनशैलभूषा ॥ ४८ ॥

सदंससंसञ्जितकुन्तलान्तिकावतीर्णकर्णाभरणाढ्यकन्धरः । सुबन्धुरस्कन्धनिबन्धनो युवा सुसुन्दरस्सुन्दरदोर्विजृम्भते ॥

व्यूढगूढभुजजत्रुमुल्लसत्कम्बुकन्धरधरं धराधरम् । वृक्षषण्डमयभूभृतस्तटे सुन्दरायतभुजं भजामहे ॥ ५० ॥

मन्दरभ्रमणविभ्रमोद्भटास्सुन्दरस्य विलसन्ति बाहवः । इन्दिरासमभिनन्दभन्दनाश्चन्दनागरुविलेपभूषिताः ॥ ५१ ॥

ज्याकिणाङ्कपरिकर्मधर्मिणो भान्ति सुन्दरभुजस्य बाहवः । पारिजातविटपायितर्द्धयः प्रार्थितार्थपरिदानदीक्षिताः ॥

सागराम्बरतमालकाननश्यामलर्द्धय उदारपीवराः । शेषभोगपरिभोगभागिनस्तन्निभा वनगिरीशितुर्भुजाः ॥ ५३ ॥

अहमहमिकाभाजो गोवर्धनोद्धृतिनर्मणि प्रमथनविधावब्धेर्लब्धप्रबन्धसमक्रियाः ।
अभिमतबहूभावाः कान्ताभिरम्भणसंभ्रमे वनगिरिपतेर्बाहाश्शुम्भन्ति सुन्दरदोर्हरेः ॥ ५४ ॥

श्रीमद्वनाद्रिपतिपाणितलाब्जयुग्ममारूढयोर्विमलशङ्खरथाङ्गयोस्तु ।
एकोऽब्जमाश्रित इवोत्तमराजहंसः पद्मप्रियोऽर्क इव तत्समितो द्वितीयः ॥ ५५ ॥

लक्ष्म्याः पदं कौस्तुभसंस्कृतं च श्रीवत्सभूमिर्विमलं विशालम् ।
विभाति वक्षो वनमालयाऽऽढ्यं वनाद्रिनाथस्य सुसुन्दरस्य ॥ ५६ ॥

सौन्दर्यामृतसारपूरपरिवाहावर्तगर्तायितं यातः किञ्च विरिञ्चसंभवनभूम्यम्भोजसंभूतिभूः ।
नाभिश्शुम्भति कुम्भिकुम्भनिभनिर्भातस्तनस्वर्वधूसंभुक्तद्रुमषण्डशैलवसतेरारूढलक्ष्या हरेः ॥ ५७ ॥

सुन्दरस्य किल सुन्दरबाहोः श्रीमहातरुवनाचलभर्तुः । हन्त ! यत्र निवसन्ति जगन्ति प्रापितकृशिम तत्तनु मध्यम् ॥

पिष्टदुष्टमधुकैटभकीटौ हस्तिहस्तयुगलाभसुवृत्तौ। राजतः क्रमकृशौ च सदूरू सुन्दरस्य वनभूधरभर्तुः॥ ५९॥

यौवनवृषककुदोद्भेदनिभं नितरां भाति विभोरुभयं जानु शुभाकृतिकम्।
सुन्दरभुजनाम्नो मन्दरमथिताब्धेश्चन्दनवनविलसत्कन्दरवृषभपतेः॥ ६०॥

अधोमुखं न्यस्तपदारविन्दयोरुदञ्चितोदात्तसुनालसंनिभे। विलङ्घ्य जङ्घे क नु रंहतो दृशौ वनाद्रिनाथस्य सुसुन्दरस्य मे॥
सुसुन्दरस्यास्य पदारविन्दे पदारविन्दाधिकसौकुमार्ये। अतोऽन्यथा ते बिभृयात्कथं नु तदासनं नाम सहस्रपत्रम्॥

सौन्दर्यमार्दवसुगन्धरसप्रवाहैरेते हि सुन्दरभुजस्य पदारविन्दे।
अम्भोजडम्भपरिरम्भणमभ्यजैष्टां तद्वै पराजितमिमे शिरसा बिभर्ति॥ ६३॥

एते ते बत! सुन्दराह्वयजुषः पादारविन्दे शुभे यन्निर्णेजसमुत्थितत्रिपथगास्रोतस्सु किञ्चित्किल।
धत्तेऽसौ शिरसा ध्रुवस्तदपरं स्रोतो भवानीपतिर्यस्यास्यालकनन्दिकेति निजगुर्नामैवमन्वर्थकम्॥ ६४॥

आम्नायकल्पलतिकोत्थसुगन्धिपुष्पं योगीन्द्रहार्दसरसीरुहराजहंसम्।
उत्पक्वधर्मसहकारफलप्रकाण्डं वन्देय सुन्दरभुजस्य पदारविन्दम्॥ ६५॥

सुसुन्दरस्यास्य तु वामनाकृतेः क्रमत्रयप्रार्थिनि मानसे किल। इमे पदे तावदिहासहिष्णुनी विचक्रमाते त्रिजगत्पदद्वये॥
सौन्दर्यसारामृतसिन्धुवीचिश्रेणीषु पादाङ्गुलिनामिकासु। न्यक्कृत्य चन्द्रश्रियमात्मकान्त्या नखावली शुम्भति सुन्दरस्य॥

यो जातकृशिमा मली च शिरसा संभावितश्शम्भुना सोऽयं यच्चरणाश्रयी शशधरो नूनं नखव्याजतः।
पूर्णत्वं विमलत्वमुज्ज्वलतया सार्धं बहुत्वं तथा यातस्तं तरुषण्डशैलनिलयं वन्दामहे सुन्दरम्॥ ६८॥

यस्याः कटाक्षणमनुक्षणमीश्वराणामैश्वर्यहेतुरिति सर्वजनीनमेतत्।
श्रीस्सेति सुन्दरनिषेवणतो निराहुस्त्वां हि श्रियश्श्रियमुदाहुरुदारवाचः॥ ६९॥

दिव्याचिन्त्यमहाद्भुतोत्तमगुणैस्तारुण्यलावण्यकप्रायैरद्भुतभावगर्भसततापूर्वप्रियैर्विभ्रमैः।
रूपाकारविभूतिभिश्च सदृशीं नित्यानपेतां श्रियं नीलां भूमिमपीदृशीं रमयिता नित्यं वनाद्रीश्वरः॥ ७०॥

अन्योन्यचेष्टितनिरीक्षणहार्दभावप्रेमानुभावमधुरप्रणयप्रभावः।
आजस्रनव्यतरदिव्यरसानुभूतिस्स्वां प्रेयसीं रमयिता वनशैलनाथः॥ ७१॥

सुन्दरस्य वनशैलवासिनो भोगमेव निजभोगमाभजन्। शेष एष इति शेषताकृतेः प्रीतिमानहिपतिस्स्वनामनि॥ ७२॥
वाहनासनवितानचामराद्याकृतिः खगपतिस्त्रयीमयः। नित्यदास्यरतिरेव यस्य वै ह्येष सुन्दरभुजो वनाद्रिगः॥ ७३॥
वनाद्रिनाथस्य सुसुन्दरस्य वै प्रभुक्तशिष्टाश्यथ सैन्यसत्पतिः। समस्तलोकैकधुरन्धरस्सदा कटाक्षवीक्ष्योऽस्य च सर्वकर्मसु॥
छत्रचामरमुखाः परिच्छदास्सूरयः परिजनाश्च नैत्यगाः। सुन्दरोरुभुजमिन्धते सदा ज्ञानशक्तिमुखनित्यसद्गुणाः॥७५॥
द्वारनाथगणनाथतल्लजाः पारिषद्यपदभागिनस्तथा। मामकाश्च गुरवः पुरातनास्सुन्दरं वनमहीध्रगं श्रिताः॥ ७६॥
ईदृशैः परिजनैः परिच्छदैर्नित्यसिद्धनिजभोगभूमिगः। सुन्दरो वनगिरेस्तटीषु वै रज्यते सकलदृष्टिगोचरः॥ ७७॥

आक्रीडभूमिषु सुगन्धिषु पौष्पिकीषु वैकुण्ठधामनि समृद्धसुवापिकासु ।
श्रीमल्लतागृहवतीषु यथा तथैव लक्ष्मीधरस्सजति सिंहगिरेस्तटीषु ॥ ७८ ॥

आनन्दमन्दिरमहामणिमण्टपान्तर्लक्ष्म्या भुवाऽप्यहिपतौ सह नीलया च ।
निस्संख्यनित्यनिजदिव्यजनैकसेव्यो नित्यं वसन् सजति सुन्दरदोर्वनाद्रौ ॥ ७९ ॥

प्रत्यर्थिनि त्रिगुणकप्रकृतेरसीम्नि वैकुण्ठधामनि पराम्बरनाम्नि नित्ये ।
नित्यं वसन्परमसत्वमयेऽप्यतीतयोगीन्द्रवाङ्मनस एष हरिर्वनाद्रौ ॥ ८० ॥

लोकांश्चतुर्दश दधत् किल सुन्दरस्य पङ्क्तीगुणोत्तरितसप्तवृतीदमण्डम् ।
अन्यानि चास्य सुसदृंशि परश्शतानि क्रीडाविधेरिह परिच्छदतामगच्छन् ॥ ८१ ॥

सुरनरतिर्यगादिबहुभेदकभिन्नमिदं जगदथ चाण्डमण्डवरणानि च सप्त तथा ।
गुणपुरुषौ च मुक्तपुरुषाश्च वनाद्रिपतेरुपकरणानि नर्मविधयेऽपि भवन्ति विभोः ॥ ८२ ॥

ज्ञानिनस्सततयोगिनस्तु ये सुन्दरांघ्रिपरभक्तिभागिनः । मुक्तिमाप्य परमां परे पदे नित्यकिङ्करपदं भजन्ति ते ॥

देवस्य सुन्दरभुजस्य वनाद्रिभर्तुर्हि शीलवत्त्वमथवाऽऽश्रितवत्सलत्वम् ।
ऐशस्वभावमजहद्भिरिहावतारैर्योऽलञ्चकार जगदाश्रिततुल्यधर्मा ॥ ८४ ॥

सिंहाद्रिनाथ! तव वाङ्मनसातिवृत्तं रूपं त्वतीन्द्रियमुदाह रहस्यवाणी ।
एवं च न त्वमिह चेत्समवातरिष्यस्त्वज्ज्ञानभक्तिविषयोऽद्य मुधाऽभविष्यन् ॥ ८५ ॥

ये भक्ता भवदेकभोगमनसोऽनन्यात्मसञ्जीवनाः तत्संश्लेषणतद्विरोधिनिधनाद्यर्थं वनाद्रीश्वर! ।
मध्येऽण्डं यदवातरस्सुरनराद्याकारदिव्याकृतिस्तेनैव त्रिदशैर्नरैश्च सुकरं स्वप्रार्थितप्रार्थनम् ॥ ८६ ॥

श्रीमन्महावनगिरीशविधीशयोस्ते मध्ये तु विष्णुरिति यः प्रथमावतारः ।
तेनैव चेत्तव महिम्नि जनाः किलान्धास्त्वन्मत्स्यभावमवगम्य कथं भवेयुः ॥ ८७ ॥

हे देव! सुन्दरभुज! त्वमिहाण्डमध्ये सौलभ्यतो विसदृशं चरितं महिम्नः ।
अङ्गीकरोषि यदि तत्र सुरैरमीभिस्साम्यान्निकर्षपरिपालनमेव साधु ॥ ८८ ॥

इहावतीर्णस्य वनाद्रिनाथ! ते निगूहतः स्वं महिमानमैश्वरम् ।
उमापतेः किं विजयः प्रियङ्करः प्रियङ्करा वेन्द्रजिदस्त्रबन्धना ॥ ८९ ॥

पुच्छोत्पुच्छनमूर्च्छनोद्धतिधुतव्यावर्तितावर्तवत्संवर्तार्णवनीरपूरविलुठत्पाठीनदिव्याकृतेः ।
सिंहाद्रीश! न वैभवं तव कथं स्वालक्ष्यमालक्ष्यते पद्माक्षस्य जुघुक्षतोऽपि विभवं लक्ष्मीधराधोक्षज! ॥

साचलावटतटाकदीर्घिकाजाह्नवीजलविवर्धितः क्षये । श्रृङ्गसङ्गमितनौर्मनोरभूरग्रतोऽण्डजवपुर्हि सुन्दर! ॥ ९१ ॥

प्रलयजनीरपूरपरिपूरितस्वनिलयावसन्नवदनभ्रमदशरण्यभूतशरणार्थिनाकिशरणं भवन् स्वकृपया ।
चलदुदधीरिताम्बुकलुषीक्रियाढ्यगमनस्वपृष्ठविधृताचलकुल एष मीनतनुरत्र सुन्दरभुजो वनाद्रिनिलयः ॥ ९२ ॥

स्वपृष्ठे प्रष्टाद्रिभ्रमणकरणैः किञ्च फणिनः विकृष्टिव्याकृष्टिव्यतिविधुतदुग्धाब्धिचलितैः ।
अविस्पन्दो नन्दन् विकसदरविन्देक्षणरुचिः पुराऽभूस्सिंहाद्रेः प्रियतम! हरे! कच्छपवपुः ॥ ९३ ॥

जगत्प्रलीनं पुनरुद्दिधीर्षतस्सिंहक्षितिक्षिन्निलयस्थ! सुन्दर! ।
पुरा वराहस्य तवेयमुर्वरा दंष्ट्राह्वयेन्दोः किल लक्ष्म लक्षिता ॥ ९४ ॥

न वायुः पस्पन्दे ययतुरथवाऽस्तं शशिरवी दिशोऽनश्यन् विश्वाऽप्यचलदचला साचलकुला ।
नभश्च प्रश्चोति क्वथितमपि पाथो नरहरौ त्वयि स्तम्भे शुम्भद्वपुषि सति हे सुन्दरभुज! ॥ ९५ ॥

अरालं पातालं त्रिदशनिलयः प्रापितलयो धरित्री निर्धूता ययुरपि दिशः कामपि दिशम् ।
अजृम्भिष्टाम्भोधिर्घुमुघुमिति घूर्णन् सुररिपोः विभिन्दाने वक्षस्त्वयि नरहरौ सुन्दरभुज! ॥ ९६ ॥

नखक्रकचकप्रधिक्वथितदैत्यवक्षःस्थलीसमुत्थरुधिरच्छटाच्छुरितबिम्बितं स्वं वपुः ।
विलोक्य रुषितः पुनः प्रतिमृगेन्द्रशङ्कावशाद्य एष नरकेसरी स इह दृश्यते सुन्दरः ॥ ९७ ॥

क्षितिरियं जनिसंहृतिपालनैः निगरणोद्गरणोद्धरणैरपि। वनगिरीश! तवैव सती कथं वरद! वामन! भिक्षणमर्हति ॥
भार्गवः किल भवन् भवान्पुरा कुन्दसुन्दरवनाचलेश्वर!। अर्जुनस्य बलदर्पितस्य तु च्छेत्स्यति स्मरति बाहुकाननम् ॥

आज्ञा तवात्रभवती विदिता त्रयी सा धर्मं तदुक्तमखिलेन वनाद्रिनाथ! ।
अन्यूनमाचरितुमास्तिकशिक्षणार्थमत्रावतीर्य किल सुन्दर! राघवोऽभूः ॥ १०० ॥

वनगिरिपतिरंशितेति देवैः त्रिपुरहरत्रिपुरघ्नचापभङ्गात्। व्यगणि परशुरामदर्शितस्य स्वकधनुषः परिमर्शदर्शनाच्च ॥

अनवाप्तमत्र किल लिप्स्यते जनैर्न च लब्धमेतदिह भोक्तमिष्यते ।
अनवाप्तमत्र किल नास्ति राम! तज्जगती त्वया तृणमवेक्षि सुन्दर! ॥ १०२ ॥

शिखरिषु विपिनेष्वप्यापगास्वच्छतोयास्वनुभवसि रसज्ञो दण्डकारण्यवासान् ।
तदिह तदनुभूतौ साभिलाषोऽद्य राम! श्रयसि वनगिरीन्द्रं सुन्दरीभूय भूयः ॥ १०३ ॥

उपवनतरुषण्डैर्मण्डिते गण्डशैलप्रणयिभवदुदन्तोद्गायिगन्धर्वसिद्धे ।
वनगिरितटभूमिप्रस्तरे सुन्दर! त्वं भजसि नु मृगयानानुद्रवश्रान्तिशान्तिम् ॥ १०४ ॥

कूलेऽब्धेः किल दक्षिणस्य निवसन्दूरोत्तराम्भोधिगान् दैत्यानेकपतत्रिणाऽच्छिन इतीयं किंवदन्ती श्रुता ।
तत्रैवेश्वरमम्भसां व्यजयथास्तस्माद्वनाद्रीश्वर! श्रीमन्! सुन्दर! सेतुबन्धनमुखाः क्रीडास्तवाडम्बरम् ॥ १०५ ॥

रघुकुलतिलक! त्वं जातुचिद्यातुधानच्छलमृगमृगयायां संप्रसक्तः पुराऽभूः ।
तदुपजनितखेदच्छेदनायाद्य गायन्मधुकरतरुषण्डं रज्यसे किं वनाद्रिम् ॥ ॥ १०६ ॥

हे सुन्दरैकतरजन्मनि कृष्णभावे द्वे मातरौ च पितरौ च कुले अपि द्वे ।
एकक्षणादनुगृहीतवतः फलं ते नीला कुलेन सदृशी किल रुक्मिणी च ॥ १०७ ॥

त्वं हि सुन्दर! यदा स्तनन्धयः पूतनास्तनमधास्तदा नु किम्। जीर्णमेव जठरे पयोविषं दुर्जरं वद तदात्मना सह ॥

आश्रितेषु सुलभो भवन् भवान् मर्त्यतां यदि जगाम सुन्दर!। अस्तु नाम तदुलूखले कियद्दामबद्ध इति किं तदाऽरुदः ॥

सुन्दरोरुभुज! नन्दनन्दनस्त्वं भवन् भ्रमरविभ्रमालकः। मन्दिरेषु नवनीततल्लजं वल्लवीधियमुत व्यचूचुरः ॥ ११० ॥

कालियस्य फणतां शिरस्तु मे सत्कदम्बशिखरत्वमेव वा। वष्टि जुष्टवनशैल! सुन्दर! त्वत्पदाब्जयुगमर्पितं ययोः ॥

गूहितस्वमहिमाऽपि सुन्दर! त्वं व्रजे किमिति शक्रमाक्रमीः। सप्तरात्रमदधाश्च किं गिरिं पृच्छतश्च सुहृदः किमक्रधः ॥

हे नन्दनन्दन! सुसुन्दर! सुन्दराह्व! बृन्दावने विहरतस्तव वल्लवीभिः।
वेणुध्वनिश्रवणतस्तरुभिस्तदा वै सग्रावभिर्जतुविलायमहो! विलिल्ये ॥ ११३ ॥

गायंगायं वनगिरिपते! त्वं हि बृन्दावनान्तर्गोपीसंघैर्विहरसि यदा सुन्दर! व्यूढबाहो!।
रासारम्भोत्सवबहुविधप्रेमसीमन्तिनीनां चेतश्चेतस्तव च तु तदा कां दशामन्वभूताम् ॥ ११४ ॥

इङ्गितं निमिषितं च तावकं रम्यमद्भुतमतिप्रियङ्करम्। तेन कंसमुखकीटशासनं सुन्दराल्पकमपि प्रशस्यते ॥११५॥

वाराणसीदहनपौण्ड्रकभौमभङ्गकल्पद्रुमाहरणशङ्करजृम्भणाद्याः।
अन्याश्च भारतबलक्रथनादयस्ते क्रीडारसुसुन्दरभुज! श्रवणामृतानि ॥ ११६ ॥

त्वं हि सुन्दर! वनाद्रिनाथ! हे वेङ्कटाह्वयनगेन्द्रमूर्धनि। देवसेवितपदाम्बुजद्वयः संश्रितेभ्य इह तिष्ठसे सदा ॥११७॥

हस्तिशैलनिलयो भवन् भवान् साम्प्रतं वरदराजसाह्वयः। इष्टमर्थमनुकम्पया ददद्विश्वमेव दयते हि सुन्दर! ॥ ११८ ॥

मध्येक्षीरपयोधि शेषशयने शेपे सदा सुन्दर! त्वं तद्वैभवमात्मनो भुवि भवद्भक्तेषु वात्सल्यतः।
विश्राण्याखिलनेत्रपात्रमिह सन् सह्योद्भवायास्तटे श्रीरङ्गे निजधाम्नि शेषशयने शेषे वनाद्रीश्वर! ॥ ११९॥

कल्कीभविष्यन् कलिकल्कदूषितान्दुष्टानशेषान् भगवन्! हनिष्यसि।
स एष तस्यावसरस्सुसुन्दर! प्रशाधि लक्ष्मीश! समक्षमेव नः ॥ १२० ॥

ईदृशास्त्वदवतारसत्तमास्सर्व एव भवदाश्रितान् जनान्। त्रातुमेव न कदाचिदन्यथा तेन सुन्दर! भवन्तमाश्रये॥१२१॥

त्वामामनन्ति कवयः करुणामृताब्धिं त्वामेव संश्रितजनिघ्नमुपघ्नमेषाम्।
येषां व्रजन्निह हि लोचनगोचरत्वं है सुन्दराह्व! परिचस्करिषे वनाद्रिम् ॥ १२२ ॥

अशक्यं नो किञ्चित्तव न च न जानासि निखिलं दयालुः क्षन्ता चास्यहमपि न चागांसि तरितुम्।
क्षमोऽतस्त्वच्छेषो ह्यगतिरिति च क्षुद्र इति च क्षमस्वैतावन्नोऽबलमिह हरे! सुन्दरभुज! ॥ १२३ ॥

लङ्कायुद्धहतान् हरीन् द्विजसुतं शम्बूकदोषान्मृतं सान्दीपन्यभिजं मृतं द्विजसुतान् बालांश्च वैकुण्ठगान्।
गर्भं चार्जुनिसंभवं व्युदधरस्स्वेनैव रूपेण यः स्वाभीष्टं मम मद्गुरोश्च ददसे नो किं वनाद्रीश्वर! ॥ १२४॥

आयोध्यकान् सपशुकीटतृणांश्च जन्तून् किंकर्मणो नु बत! कीदृशवेदनाढ्यान्।
सायुज्यलभ्यविभवान्निजनित्यलोकान् सान्तानिकानगमयो वनशैलनाथ! ॥ १२५ ॥

हरितवारणभृत्यसमाह्वयं करिगिरौ वरदस्त्वमपूर्विकाम्। दशमलम्भय एव हि सुन्दर! स्फुटमदाश्च परश्शतमीदृशम् ॥

इह च देव! ददासि वरान् परान् वरद! सुन्दर! सुन्दरदोर्धर!। वनगिरेरभितस्तटमावसन्नखिललोचनगोचरवैभवः ॥

इदमिमे शृणुमो मलयध्वजं नृपमिह स्वयमेव हि सुन्दर! । चरणसात्कृतवानिति तद्वयं वनगिरीश्वर! जातमनोरथाः॥

विज्ञापनां वनगिरीश्वर! सत्यरूपामङ्गीकुरुष्व करुणार्णव! मामकीनाम् ।
श्रीरङ्गधामनि यथापुरमेकतोऽहं रामानुजार्यवशगः परिवर्तिषीय ॥ १२९ ॥

किंचेदञ्च विरिञ्चिभावन! वनाद्रीश! प्रभो! सुन्दर! प्रत्याख्यानपराङ्मुखो वरदतां पश्यन्नवश्यं शृणु ।
श्रीरङ्गश्रियमन्वहं प्रगुणयंस्त्वद्भक्तभोग्यां कुरु प्रत्यक्षं सुनिरस्तमेव विदधत्प्रत्यर्थिनां प्रार्थनम् ॥ १३० ॥

कारुण्यामृतवारिधे! वृषपते! हे सत्यसङ्कल्पन! श्रीमन्! सुन्दर! योग्यताविरहितानुत्सार्य सद्वत्सल! ।
क्षाम्यन् साधुजनैः कृतांस्तु निखिलानेवापचारान् क्षणात् तद्भोग्यामनिशं कुरुष्व भगवन्! श्रीरङ्गधामश्रियम् ॥

इदं भूयो भूयः पुनरपि च भूयः पुनरपि स्फुटं विज्ञीप्सामीत्यगतिरबुधोऽनन्यशरणः ।
कृतागा दुष्टात्मा कलुषमतिरस्मीत्यनवधेः दयायास्ते पात्रं वनगिरिपते! सुन्दरभुज! ॥ १३२ ॥

॥ इति पञ्चस्तव्यां सुन्दरबाहुस्तवः समाप्तः ॥



श्री श्रीवत्सचिह्नमिश्रैरनुगृहीतायां पञ्चस्तव्यां

## ॥ वरदराजस्तवः ॥



श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहे । यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥

स्वस्ति हस्तिगिरिमस्तशेखरस्संतनोतु मयि सन्ततं हरिः । निस्समाभ्यधिकमभ्यधत्त यं देवमौपनिषदी सरस्वती॥ १ ॥
श्रीनिधिं निधिमपारमर्थिनामर्थितार्थपरिदानदीक्षितम् । सर्वभूतसुहृदं दयानिधिं देवराजमधिराजमाश्रये ॥ २ ॥
नित्यमिन्द्रियपथातिगं महो योगिनामपि सुदूरगं धियः । अप्यनुश्रवशिरस्सु दुर्ग्रहं प्रादुरस्ति करिशैलमस्तके ॥ ३ ॥
वल्लिका श्रुतिमतल्लिकामयी येन पल्लवितविश्वशाखया । स्वश्रिया करिगिरेरनुक्रियां वष्टि मृष्टवरदं तमाश्रये ॥ ४ ॥
यं परोक्षमुपदेशतस्त्रयी नेति नेति परपर्युदासतः । वक्ति यस्तमपरोक्षमीक्षयत्येष तं करिगिरिं समाश्रये ॥ ५ ॥
एष ईश इति निर्णयं त्रयी भागधेयरहितेषु नो दिशेत् । हस्तिधामनि न निर्णयेत को देवराजमयमीश्वरस्त्विति ॥६॥
है कुदृष्ट्यभिनिविष्टचेतसां निर्विशेषसविशेषताश्रयम् । संशयं करिगिरिर्नुदत्यसौ तुङ्गमङ्गलगुणास्पदे हरौ ॥ ७ ॥
न्यायतर्कमुनिमुख्यभाषितैश्शोधितैस्सह कथञ्चन त्रयी । जोषयेद्धरिमनंहसो जनान् हस्तिधाम सकलं जनं स्वयम्॥
अद्भुतं महदसीमभूमकं किञ्चिदस्ति किल वस्तु निस्तुलम् । इत्यवोधि यदिदं तदग्रतस्तथ्यमेव करिधाम्नि दृश्यते॥९॥
संवदेत किल यत्प्रमान्तरैस्तत्प्रमाणमिति ये हि मेनिरे । तन्मतेऽपि किल मानतां गता हस्तिनाऽद्य परवस्तुनि त्रयी ॥

गुणायत्तं लोके गुणिषु हि मतं मङ्गलपदं विपर्यस्तं हस्तिक्षितिधरपते! तत्त्वयि पुनः ।
गुणास्सत्यज्ञानप्रभृतय उत त्वद्गततया शुभीभूयं याता इति हि निरणैष्म श्रुतिवशात् ॥ ११ ॥

निराबाधं नित्यं निरवधि निरंहो निरुपमं सदा शान्तं शुद्धं प्रतिभटमवद्यस्य सततम् ।
परं ब्रह्माम्नातं श्रुतिशिरसि यत्तद्वरद! ते परं रूपं साक्षात्तदिदमपदं वाङ्मनसयोः ॥ १२ ॥

प्रशान्तानन्तात्मानुभवजमहानन्दमहिमप्रसक्तस्तैमित्यानुकृतवितरङ्गार्णवदशम् ।
परं यत्ते रूपं स्वसदृशदरिद्रं वरद! तत्त्रयी पिस्प्रक्षन्ती परनिरसने श्राम्यति परम् ॥ १३ ॥

न वक्तुं न श्रोतुं न मनितुमथोपासिसिषितुं न च द्रष्टुं स्प्रष्टुं तदनु न च भोक्तुं हि सुशकम् ।
परं यद्वस्तूक्तं ननु वरद! साक्षात्तदसि भो! कथं विश्वस्मै त्वं करिगिरिपुरस्तिष्ठस इह ॥ १४ ॥

प्रकृष्टं विज्ञानं बलमतुलमैश्वर्यमखिलं विमर्यादं वीर्यं वरद! परमा शक्तिरपि च ।
परं तेजश्चेति प्रवरगुणषट्कं प्रथमजं गुणानां निस्सीम्नां गणनविगुणानां प्रसवभूः ॥ १५ ॥

गुणैष्षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ ततस्तिस्रस्तेषां त्रियुग! युगलैर्हि त्रिभिरभुः ।
व्यवस्था या चैषा ननु वरद! साऽऽविष्कृतिवशाद्भवान् सर्वत्रैव त्वगणितमहामङ्गलगुणः ॥ १६ ॥

इयं वैयूही वै स्थितिरथ किलेच्छाविहृतये विभूतीनां मध्ये सुरनरतिरश्चामवतरन् ।
सजातीयस्तेषामिति तु विभावाख्यामपि भजन् करीश! त्वं पूर्णो वरगुणगणैस्तान् स्थगयसि ॥ १७ ॥

परो वा व्यूहो वा विभव उत वाऽर्चावतरणो भवन् वाऽन्तर्यामी वरवरद! यो यो भवसि वै ।
स स त्वं सन्नैशान् वरगुणगणान् बिभ्रदखिलान् भजद्भयो भास्येवं सततमितरेभ्यस्त्वितरथा ॥ १८ ॥

दयाक्षान्त्यौदार्यम्रदिमसमतासौहृदधृतिप्रसादप्रेमार्जवाश्रितसुलभताद्या वरगुणाः ।
तथा सौन्दर्याद्यास्तव वरदराजोत्तमगुणाः विसीमानोऽसंख्याः प्रणतजनभोगं प्रसुवते ॥ १९ ॥

अनन्याधीनत्वं तव किल जगुर्वैदिकगिरः पराधीनं त्वां तु प्रणतपरतन्त्रं मनुमहे ।
उपालम्भोऽयं भोः श्रयति बत! सार्वज्ञ्यमपि ते यतो दोषं भक्तेष्विह वरद! नैवाकलयसि ॥ २० ॥

पाणिपादवदनेक्षणशब्दैरम्बुजान्यपदिशन् वरद! त्वम् । बाहुभिस्त्वतिविशालतमालानाञ्जनं करिगिरेरसि शृङ्गम् ॥
त्वामुदारभुजमुन्नसमायत्कर्णपाशपरिकर्मसदंसम् । आयताक्षमभिजातकपोलं पारणीयति वरप्रद! दृङ्मे ॥ २२ ॥
नीलमेघनिभमञ्जनपुञ्जश्यामकुन्तलमनन्तशयं त्वाम् । अब्जपाणिपदमम्बुजनेत्रं नेत्रसात्कुरु करीश! सदा मे ॥ २३॥
त्वक्च दृक्च निपिपासति जिह्वा विह्वला श्रवणवत्तरवृत्तौ । नासिका त्वयि करीश! तथेति प्राप्नुयां कथमिमां त्विदवस्थाम्॥
आधिराज्यमधिकं भुवनानामीश! ते पिशुनयन् किल मौलिः । चूलिकामणिसहस्रमरीचेर्हस्तिभूषण! भवत्युदयाद्रिः ॥
उद्धरत्युपरि भक्तजनानित्यूर्ध्वताश्रयणसूचितशक्तिम् । ऊर्ध्वपुण्ड्रतिलकं बहुमानात्किं बिभर्षि वरद! स्वललाटे ॥ २६ ॥
कर्णिका तव करीश! किमेषा कर्णभूषणमुतांसविभूषा । अंसलम्ब्यलकभूषणमाहो मानसस्य मम वा परिकर्म ॥ २७ ॥
पारिजातविटपानभितो या पुष्पसंपदुदियात्करिनाथ! । तां विडम्बयति तावकबाहुष्वातता तु कटकाङ्गदलक्ष्मीः ॥२८॥
मथ्यमानचलफेनिलसिन्धुप्रोत्थितिक्षणदशां गमितौ ते । वक्षसि स्फुरितमौक्तिकहारे कौस्तुभश्च कमला च करीश! ॥
अञ्जनक्षितिभृतो यदि नामोपत्यका वरद! हेममयी स्यात् । तादृशी तव विभाति तु लक्ष्मीराम्बरी बत! विडम्बितविद्युत् ॥
परभागमियाद्रवेस्तमिस्रा वरदाद्य त्वयि तन्निशामयामः । गमिता तव वक्त्रचित्रभानोः परभागं ननु कौन्तली तमिस्रा ॥
उभयोरपि पक्षयोस्तिथिर्या विषमीभावनिरासदाऽष्टमीति । उपमानजसम्पदे हि सेन्दोर्वरदाभूद्भवतो ललाटलक्ष्म्या ॥३२॥

अलकालिचिकीर्षया किलात्ता सुपरीचिक्षिषया ललाटपट्टे। सुमषी निकषीकृता भ्रुवौ ते वरद! स्यादकृतत्वतस्तु नैवम्॥
श्रवसश्च दृशश्च शब्दरूपग्रहणे ते न हि जीववद्व्यवस्था। उभयोरखिलेक्षणक्षमत्वाद्वरदातः श्रवणाश्रये दृशौ ते॥ ३४॥
करुणारसवाहिवीक्षणोर्मेर्वरद! प्रेममयप्रवाहभाजः। तततीरवनावली भ्रुवौ दृक्चलसिन्धोस्तव नासिकैव सेतुः॥ ३५॥
विभवं विवृणोति विस्तृणीते रुचमाविष्कुरुते कृपामपाराम्। अभिवर्षति हर्षमा भावं तनुते ते वरदैष दृष्टिपातः॥
अरुणाधरपल्लवे लसन्ती वरदासौ द्विजचन्द्रचन्द्रिका ते। अधिविद्रुममस्तनिस्तलालीरुचमाविष्कुरुते हि पुष्कराक्ष!॥
स्मितनिर्झरिका विनिष्पतन्ती तव वक्षःस्थलभूतले विकीर्णा। वरद! प्रबिभर्ति हारलक्ष्मीमपि मुक्तावलिका नदीव तज्जा॥
परिमण्डितरासमण्डलाभिर्वरदाघ्रातमभीष्टगोपिकाभिः। अनुवर्तितदातनप्रहर्षादिव फुल्लं हि कपोलयोर्युगं ते॥ ३९॥
मुखमुन्नसमायताक्षमुद्यत्स्मितदन्तं रुचिराधरं नतभ्रु। लसदंसबिलम्बिकर्णपाशं मयि ते निश्चलमस्तु हस्तिनाथ!॥४०॥

पद्मायाः प्रणयरसात्समासजन्त्यास्स्वं बाहुं सुबहुमतो भुजेन तेन।
कां नामान्वभवदहो! दशां तदात्वे कण्ठस्ते करिगिरिनाथ! कम्बुकान्तः॥ ४१॥

सायामा धृतपरिणद्धयोऽब्धयो वा तादृश्यः स्फुटमथवा दिशश्चतस्रः।
चत्वारो वरद! वरप्रदास्त्वदीया भासन्ते भुजपरिघास्तमालनीलाः॥ ४२॥

आश्लेषे वरद! भुजास्त्वेन्दिराया गोपीनापभिमतरासबन्धने वा।
बन्धे वा मुदमधिकां यशोदयाऽहो संप्राप्तास्तव नवनीतमोषदोषात्॥ ४३॥

सालीया इव विटपास्सपल्लवाग्राः कल्लोला इव जलधेस्सविद्रुमाग्राः।
भोगीन्द्रा इव च फणामणीद्धवक्त्रा भासन्ते वरद! भुजास्तवारुणाग्राः॥ ४४॥

अम्भोधेस्स्वयमभिमन्थनं चकर्थ क्षोणीध्रं पुनरबिभश्च सप्तरात्रम्।
सप्तानां विवलयसिस्म कण्ठमुक्ष्णामम्लाना वरद! तथाऽपि पाणयस्ते॥ ४५॥

रिङ्खातो व्रजसदनाङ्गणेषु किं ते गोयष्टिग्रहणवशान्नु गोपगोष्ठ्याम्।
आलम्बाद्वयनयसूत्रतोत्त्रयोर्वा पाणीनां वरद! तवारुणत्वमासीत्॥ ४६॥

सर्वज्ञास्समुचितशक्तयस्सदैव त्वत्सेवानियमजुषस्त्वदेकभोगाः।
हेतीनामधिपतयस्सदा किमेतान् शोभार्थं वरद! बिभर्षि हर्षतो वा॥ ४७॥

किं धातुर्गगनविधानमातृकाऽभूद्वक्षस्ते वरद! वरेण्य! यत्र नाम।
पद्माया मुखमथ कौस्तुभश्च जातौ चन्द्रार्कावुडुनिकरायते तु हारः॥ ४८॥

अण्डानां त्वदुदरमामनन्ति सन्तः स्थानं तद्वरद! कथंनु कार्श्यमस्य।
माहात्म्यं स्वत इह येषु नूनमेषामृद्धिस्स्यान्महिमकरी न हीतरेषाम्॥ ४९॥

सौन्दर्यामृतरसवाहवेगजस्स्यादावर्तस्तव किल पद्मनाभ! नाभिः।
तत्पद्मं वरद! विभाति कान्तिमय्या लक्ष्म्यास्ते सकलवपुर्जुषो नु सद्म॥ ५०॥

या दामोदर इति नामदा तवासीत्सा दामा किल किणकारिणी बभूव ।
तन्नूनं वरद! वलित्रयच्छलेन त्वन्मध्यप्रथमविभूषणीबभूव ॥ ५१ ॥

यादृग्बीजाध्युषितभुवि यद्वस्तु हस्तीश! जातं तत्तादृक्षं फलति हि फलं त्वय्यपीक्षामहे तत् ।
यस्मादण्डाध्युषित उदरे तावके जायमानं पद्मं पद्मानन! किल फलत्यण्डषण्डानखण्डान् ॥ ५२ ॥

अङ्गे यज्ञेश्वर! किल जने क्वाप्यदर्शं विमर्शं विश्वाधीशः कतम इति तन्निर्णयं वर्णयामः ।
व्यावक्रोशी नृषु समुदिता यामुपाश्रित्य तेऽपि ब्रह्माद्यास्ते वरद जनितास्तुन्दकन्दारविन्दे ॥ ५३ ॥

मुष्णन्कृष्णः प्रियनिजजनैर्जय्यहैयङ्गवीनं दाम्ना भूम्ना वरद ! हि यया त्वं यशोदाकराभ्याम् ।
बद्धो बन्धक्षपणकरणीं तां किलाद्यापि मातुः प्रेम्णा गात्राभरणमुदराबन्धनाख्यं बिभर्षि ॥ ५४ ॥

सौन्दर्याख्या सरिदुरसि विस्तीर्य मध्यावरुद्धा स्थानाल्पत्वाद्विषमगतिजावर्तगर्ताभनाभिः ।
प्राप्य प्राप्तप्रथिम जघनं विस्तृता हस्तिनाथ! स्रोतोभेदं भजति भवतः पाददेशापदेशात् ॥ ५५ ॥

रम्भास्तम्भाः करिवरकराः कारभास्सारभाजो वेषाश्लेषा अपि मरतकस्तम्भमुख्यास्तुलाख्याः ।
साम्यं सम्यग्वरद! न दधुस्सर्वमुर्वोस्त्वदूर्वोर्न ह्यैश्वर्यं दधति न तथा यौवनारम्भजृम्भाः ॥ ५६ ॥

या ते गात्रे वरद! जनिता कान्तिमय्यापगाऽभूत्तस्यास्स्रोतोयुगलमिह यद्याति पादप्रवादम् ।
तज्जातोर्ध्वभ्रमियुगमिवोद्भानुनी जानुनी ते स्यादुक्ष्णोर्वा ककुदयुगलं यौवनैश्वर्यनाम्नोः ॥ ५७ ॥

प्रेम्णाऽऽघ्रातुं करिगिरिशिरोऽधोमुखीभावभाजोरंघ्रिद्वन्द्वाह्वयकमलयोर्दण्डकाण्डायमाने ।
अङ्घ्रिस्पर्शोद्भवसुखत उत्कण्टके रोमहर्षात् द्रष्टुर्दृष्टिर्वरद ! किमलं लङ्घितुं जङ्घिके ते ॥ ५८ ॥

भक्तानां यद्वपुषि दहरं पण्डितं पुण्डरीकं यच्चाम्लानं वरद! सतताध्यासनादासनाब्जम् ।
आम्नायानां यदपि च शिरो यश्च मूर्धा शठारेर्हस्त्यद्रेर्वा किमतिसुखदं तेषु पादाब्जयोस्ते ॥ ५९ ॥

पद्मास्वद्याङ्गुलिषु वरद! प्रान्ततः कान्तिसिन्धोर्वीचीवीथीविभवमुभयीष्वम्भसो लम्भितासु ।
विन्दन्निन्दुः प्रतिफलनजां सम्पदं किं पदं ते छायाच्छद्मा नखविततितां लम्भितश्शुम्भितस्सन् ॥ ६० ॥

शम्भोरम्भोरुहमुख! सखा सन् सहाङ्कश्शशाङ्कः कुर्वन्सेवां वरद! विकलो वृत्तहीनस्सुवक्रः ।
त्वत्पादाब्जे प्रियमख! नखच्छद्मनाऽऽश्रित्य नित्यं सद्वृत्तोऽभूत्स च दशगुणः पुष्कलो निष्कलङ्कः ॥ ६१ ॥

त्वत्पादाब्जे प्रजाता सुरसरिदभवत्प्राक् चतुर्धा ततस्तास्वेकां धत्ते ध्रुवस्सा त्रिभुवनमपुनात्त्रीन्पथो भावयन्ती ।
तत्रैका खं व्रजन्ती शिवयति तु शिवं सा पुनस्सप्तधाऽभूत्तास्वेका गां पुनाना वरद! सगरजस्स्वर्गसर्गं चकार ॥६२॥

परिजनपरिबर्हा भूषणान्यायुधानि प्रवरगुणगणाश्च ज्ञानशक्त्यादयस्ते ।
परमपदमथाण्डान्यात्मदेहस्तथाऽऽत्मा वरद! सकलमेतत्संश्रितार्थं चकर्थ ॥ ६३ ॥

अनाप्तं ह्याप्तव्यं न तव किल किञ्चिद्वरद! ते जगज्जन्मस्थेमप्रलयविधयो धीविलसितम् ।
तथाऽपि क्षोदीयस्सुरनरकुलेष्वाश्रितजनान्समाश्लेष्टुं पेष्टुं तदसुखकृतां चावतरसि ॥ ६४ ॥

विवेकधियमेकतो ह्यभिनिवेशलेशो हरेन्महत्त्वभिनिवेशनं किमुत तन्महिम्नस्तव ।
अहो! विसदृशे जगत्यवततर्थ पार्थादिकं निजं जनमुदञ्चयन्वरद! तं समाश्लेषकः ॥ ६५ ॥

संश्लेषे भजतां त्वरापरवशः कालेन संशोध्य तानानीय स्वपदे स्वसङ्गमकृतं सोढुं विलम्बं बत!
अक्षाम्यन् क्षमिणां वरो वरद! सन्नत्रावतीर्णो भवैः किं नाम त्वमसंश्रितेषु वितरन् वेषं वृणीषे तु तान् ॥ ६६ ॥

वरद! यदि न भुव्यवातरिष्यश्श्रुतिविहितास्त्वदुपासनार्चनाद्याः ।
करणपथविदूरगे सति त्वयि अविषयतानिकृताः किलाभविष्यन् ॥ ६७ ॥

यदपराधसहस्रमजस्रजं त्वयि शरण्य! हिरण्य उपावहत् । वरद! तेन चिरं त्वमविक्रियो विकृतिमर्भकनिर्भजनादगाः ॥

P 33 त्वामामनन्ति कवयः करुणामृताब्धे! ज्ञानक्रियाभजनलभ्यमलभ्यमन्यैः ।
एतेषु केन वरदोत्तरकोसलस्थाः पूर्वं सदूर्वमभजन्त हि जन्तवस्त्वाम् ॥ ६९ ॥

भजत्सु वात्सल्यवशात्समुत्सुकः प्रकाममत्रावतरेर्वरप्रद! ।
भवेश्च तेषां सुलभोऽथ किं न्विदं यदङ्गदाम्ना नियतः पुराऽरुदः ॥ ७० ॥

नरसिंहतनुरगौणी समसमयसमुद्भवश्च भक्तगिरः । स्तम्भे च सम्भवस्ते पिशुनयति परेशतां वरद! ॥ ७१ ॥

तापत्रयीमयदवानलदह्यमानं मुह्यन्तमन्तमवयन्तमनन्त! नैव ।
स्थातुं प्रयातुमुपयातुमनीशमीश! हस्तीश! दृष्ट्यमृतवृष्टिभिराभजेथाः ॥ ७२ ॥

नानाविरुद्धविदिशासु दिशासु चाहो वन्ध्यैर्मनोरथशतैर्युगपद्विकृष्टः ।
त्वत्पादयोरनुदितस्पृह एष सोहं न स्वस्तिहस्तिगिरिनाथ! निशामयामि ॥ ७३ ॥

है निर्भयोऽस्म्यविनयोऽस्मि यतस्त्वदंघ्रौ लिप्सामलब्धवति चेतसि दर्विनीते ।
दुष्कर्मवर्मपरिकर्मित एष सोऽहमग्रे वरप्रद! तव प्रलपामि किञ्चित् ॥ ७४ ॥

सव्याधिराधिरवितुष्टिरनिष्टयोगस्स्वाभीष्टभञ्जनममर्षकरो निकर्षः ।
कृन्तन्ति सन्ततमिमानि मनो मदीयं हस्तीश! न त्वदभिलाषनिधिप्रहाणिः ॥ ७५ ॥

विद्वेषमानमदरागविलोभमोहाद्याजानभूमिरहमत्र भवे निमज्जन् ।
निर्द्वन्द्व! नित्यनिरवद्यमहागुणं त्वां हस्तीश! कश्श्रयितुमीक्षितुमीप्सितुं वा ॥ ७६ ॥

पुत्रादयः कथममी मयि संस्थिते स्युरित्यप्रतिक्रियनिरर्थकचिन्तनेन ।
दूये न तु स्वयमहं भविताऽस्मि कीदृगित्यस्ति हस्तिगिरिनाथ! विमर्शलेशः ॥ ७७ ॥

शम्पाचलं बहुलदुःखमनर्थहेतुरल्पीय इत्यपि विमृष्टिषु दृष्टदोषम् ।
दुर्वासनादृढिमतस्सुखमिन्द्रियोत्थं हातुं न मे मतिरलं वरदाधिराज! ॥ ७८ ॥

बुद्ध्वा च नो च विहिताकरणैर्निषिद्धसंसेवनैस्त्वदपचारशतैरसह्यैः ।
भक्तागसामपि शतैर्भवताऽप्यगण्यैर्हस्तीश! वाक्तनुमनोजनितैर्हतोऽस्मि ॥ ७९ ॥

त्वद्दास्यमस्य हि मम स्वरसप्रसक्तं तच्चोरयन्नयमहं किल चस्खल प्राक् ।
त्वं मामकीन इति मामभिमन्यसे स्म हस्तीश! संशमय नस्तमिमं विवादम् ॥ ८० ॥

भोगा इमे विधिशिवादिपदं च किञ्च स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता ।
सर्वं तदूषजलजोषमहं जुषेय हस्त्यद्रिनाथ! तव दास्यमहारसज्ञः ॥ ८१ ॥

विषयविषधरव्रजव्याकुले जननमरणनक्रचक्रास्पदे । अगतिरशरणो भवाब्धौ लुठन् वरद! शरणमित्यहं त्वां वृणे ॥

अकृतसुकृतकस्सुदुष्कृत्तरः शुभगुणलवलेशदेशातिगः । अशुभगुणपरस्सहस्रावृतो वरदमुरुदयं गतिं त्वां वृणे ॥

शरणवरणवागियं योदिता न भवति बत! साऽपि धीपूर्विका ।
इति यदि दयनीयता मय्यहो! वरद! तव भवेत्ततः प्राणिमि ॥ ८४ ॥

निरवधिषु कृतेषु चागस्स्वहो मतिरनुशयिनी यदि स्यात्ततः ।
वरद! हि दयसे न संशेमहे निरनुशयधियो हता है! वयम् ॥ ८५ ॥

शरणवरणवागियं याऽद्य मे वरद! तदधिकं न किञ्चिन्मम । सुलभमभिमतार्थदं साधनं तदयमवसरो दयायास्तव ॥

विषयविषयिणी स्पृहा भूयसी तव तु चरणयोर्न साऽल्पापि मे। वरद! ननु भरस्तवैव त्वयं यदुत तव पदस्पृहाजन्ममे ॥

इयमिह मतिरस्मदुज्जीवनी वरद! तव खलु प्रसादादृते। शरणमिति वचोऽपि मे नोदियात्त्वमसि मयि ततः प्रसादोन्मुखः ॥

वरद! यदिह वस्तु वाञ्छाम्यहं तव चरणलभाविरोधस्ततः। यदि न भवति तच्च देहि प्रभो! झटिति वितर पादमेवान्यथा ॥

तदपि किमपि हन्त! दुर्वासनाशतविवशतया यदभ्यर्थये। तदतुलदय! सार्व! सर्वप्रद! प्रवितर! वरद! क्षमाम्भोनिधे!

प्रियमितरदथापि वा यद्यथा वितरसि वरदप्रभो! त्वं हि मे। तदनुभवनमेव युक्तं तु मे त्वयि निहितभरोऽस्मि सोऽहं यतः॥

यथाऽसि यावानसि योऽसि यद्गुणः करीश! यादृग्विभवो यदिङ्गितः।
तथाविधं त्वाऽहमभक्तदुर्ग्रहं प्रपत्तिवाचैव निरीक्षितुं वृणे ॥ ९२ ॥

अये! दयालो! वरद! क्षमानिधे! विशेषतो विश्वजनीन! विश्वद! ।
हितज्ञ! सर्वज्ञ! समग्रशक्तिक! प्रसह्य मां प्रापय दास्यमेव ते ॥ ९३ ॥

स्वकैर्गुणैः स्वैश्चरितैः स्ववेदनाद्व्रजन्ति ये त्वां त्वयि भक्तितोऽथवा ।
करीश! तेषामपि तावकी दया तथात्वकृत्सैव तु मे बलं मतम् ॥ ९४ ॥

यदि त्वभक्तोऽप्यगुणोऽपि निष्क्रियो निरुद्यमो निष्कृतदुष्कृतो न च ।
लभेय पादौ वरद! स्फुटास्ततः क्षमादयाद्यास्तव मङ्गला गुणाः ॥ ९५ ॥

विलोकनैर्विभ्रमणैरपि भ्रुवोः स्मितामृतैरिङ्गितमङ्गलैरपि। प्रचोदितस्ते वरद! प्रहृष्टधीः कदा विधास्ये वरिवस्यनं तव ॥

विविश्य विश्वेन्द्रियतर्षकर्षणीर्मनःस्थले नित्यनिखातनिश्चलाः ।
सुधासखीर्हस्तिपते! सुशीतला गिरः श्रवस्याऽश्रृणुयाम तावकीः ॥ ९७ ॥

अशेषदेशाखिलकालयोगिनीष्वहं त्ववस्थास्वखिलास्वनन्यधीः ।
अशेषदास्यैकरतिस्तदाचरन् करीश! वर्तेय सदा त्वदन्तिके ॥ ९८ ॥

इमं जनं हन्त! कदाऽभिषेक्ष्यति त्वदक्षिणद्योर्वरद! श्रमापहा ।
अकृत्रिमप्रेमरसप्रवाहजा विसृत्वरी वीक्षणवीचिसन्ततिः ॥ ९९ ॥

सदातनत्वेऽपि तदातनत्ववन्नवीभवत्प्रेमरसप्रवाहया । निषेवितं त्वां सततोत्कया श्रिया करीश पश्येम परश्शतं समाः ॥

समाहितैस्साधु सनन्दनादिभिस्सुदुर्लभं भक्तजनैरदुर्लभम् । अचिन्त्यमत्यद्भुतमप्रतर्कणं वरप्रद त्वत्पदमाप्नुयां कथम् ? ॥

रामानुजांघ्रिशरणोऽस्मि कुलप्रदीपस्त्वासीत्स यामुनमुनेस्स च नाथवंश्यः ।
वंश्यः पराङ्कुशमुनेस्स च सोऽपि देव्याः दासस्तवेति वरदास्मि तवेक्षणीयः ॥ १०२ ॥

॥ इति पञ्चस्तव्यां वरदराजस्तवस्समाप्तः ॥

## श्री श्रीवत्सचिह्नमिश्रैरनुगृहीतायां पञ्चस्तव्याम्

# ॥ श्रीस्तवः ॥

श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहे । यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥

स्वस्ति श्रीर्दिशतादशेषजगतां सर्गोपसर्गस्थितीः स्वर्गं दुर्गतिमापवर्गिकपदं सर्वं च कुर्वन् हरिः ।
यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलं क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तया ॥ १ ॥

हे श्रीर्देवि! समस्तलोकजननीं त्वां स्तोतुमीहामहे युक्तां भावय भारतीं प्रगुणय प्रेमप्रधानां धियम् ।
भक्तिं भन्दय नन्दयाश्रितमिमं दासं जनं तावकं लक्ष्यं लक्ष्मि! कटाक्षवीचिविसृतेस्ते स्याम चामी वयम् ॥ २ ॥

स्तोत्रं नाम किमामनन्ति कवयो यद्यन्यदीयान्गुणानन्यत्र त्वसतोऽधिरोप्य फणितिस्सा तर्हि वन्ध्या त्वयि ।
सम्यक्सत्यगुणाभिवर्णनमथो ब्रूयुः कथं तादृशी वाग्वाचस्पतिनाऽपि शक्यरचना त्वत्सद्गुणार्णोनिधौ ॥ ३ ॥

ये वाचां मनसां च दुर्ग्रहतया ख्याता गुणास्तावकास्तानेव प्रति साम्बुजिह्वमुदिता हे! मामिका भारती ।
हास्यं तत्तु न मन्महे न हि चकोर्यैकाऽखिलां चन्द्रिकां नालं पातुमिति प्रगृह्य रसनामासीत सत्यां तृषि ॥ ४ ॥

क्षोदीयानपि दुष्टबुद्धिरपि निस्स्नेहोऽप्यनीहोऽपि ते कीर्तिं देवि! लिहन्नहं न च बिभेम्यज्ञो न जिह्रेमि च ।
दुष्येत्सा तु न तावता न हि शुना लीढाऽपि भागीरथी दुष्येच्छ्वाऽपि न लज्जते न च बिभेत्यार्तिस्तु शाम्येच्छुनः॥

ऐश्वर्यं महदेव वाऽल्पमथवा दृश्येत पुंसां हि यत्तल्लक्ष्म्यास्समुदीक्षणात्तव यतस्सार्वत्रिकं वर्तते ।
तेनैतेन न विस्मयेमहि जगन्नाथोऽपि नारायणो धन्यं मन्यत ईक्षणात्तव यतस्स्वात्मानमात्मेश्वरः ॥ ६ ॥

ऐश्वर्यं यदशेषपुंसि यदिदं सौन्दर्यलावण्ययोः रूपं यच्च हि मङ्गलं किमपि यल्लोके सदित्युच्यते ।
तत्सर्वं त्वदधीनमेव यदतः श्रीरित्यभेदेन वा यद्वा श्रीमदितीदृशेन वचसा देवि! प्रथामश्नुते ॥ ७ ॥

देवि! त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते यद्यप्येवमथापि नैव युवयोस्सर्वज्ञता हीयते ।
यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञताया विदुर्व्योमाम्भोजमिदन्तया किल विदन् भ्रान्तोऽयमित्युच्यते ॥ ८ ॥

लोके वनस्पतिबृहस्पतितारतम्यं यस्याः प्रसादपरिणाममुदाहरन्ति ।
सा भारती भगवती तु यदीयदासी तां देवदेवमहिषीं श्रियमाश्रयामः ॥ ९ ॥

यस्याः कटाक्षमृदुवीक्षणदीक्षणेन सद्यस्समुल्लसितपल्लवमुल्ललास ।
विश्वं विपर्ययसमुत्थविपर्ययं प्राक् तां देवदेवमहिषीं श्रियमाश्रयामः ॥ १० ॥

यस्याः कटाक्षवीक्षाक्षणलक्षं लक्षिता महेशास्स्युः । श्रीरङ्गराजमहिषी सा मामपि वीक्षतां लक्ष्मीः ॥ ११ ॥

अर्वाञ्चो यत्पदसरसिजद्वन्द्वमाश्रित्य पूर्वे मूर्ध्ना यस्यान्वयमुपगता देशिका मुक्तिमापुः ।
सोऽयं रामानुजमुनिरपि स्वीयमुक्तिं करस्थां यत्संबन्धादमनुत कथं वर्ण्यते कूरनाथः ॥

॥ इति पञ्चस्तव्यां श्रीस्तवस्समाप्तः ॥

॥ पञ्चस्तवी च समाप्ता ॥

श्रीपराशरभट्टार्यैरनुगृहीते

# ॥ श्रीरङ्गराजस्तवे पूर्वशतकम् ॥

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः । श्रीवत्साङ्कसुतश्श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहे । यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गलसूत्रताम् ॥ १ ॥

रामानुजपदच्छाया गोविन्दाह्वाऽनपायिनी । तदायत्तस्वरूपा सा जीयान्मद्विश्रमस्थली ॥ २ ॥

रामानुजमुनिर्जीयाद्यो हरेर्भक्तियन्त्रतः । कलिकोलाहलक्रीडामुधाग्रहमपाहरत् ॥ ३ ॥

विधाय वैदिकं मार्गमकौतस्कुतकण्टकम् । नेतारं भगवद्भक्तेर्यामुनं मनवामहै ॥ ४ ॥

नौमि नाथमुनिं नाम जीमूतं भक्त्यवग्रहे । वैराग्यभगवत्तत्वज्ञानभक्त्यभिवर्षुकम् ॥ ५ ॥

ऋषिं जुषामहे कृष्णतृष्णातत्त्वमिवोदितम् । सहस्रशाखां योऽद्राक्षीद्द्राविडीं ब्रह्मसंहिताम् ॥ ६ ॥

नमः श्रीरङ्गनायक्यै यद्भ्रूविभ्रमभेदतः । ईशेशितव्यवैषम्यनिम्नोन्नतमिदं जगत् ॥ ७ ॥

श्रीस्तनाभरणं तेजः श्रीरङ्गेशयमाश्रये । चिन्तामणिमिवोद्वान्तमुत्सङ्गेऽनन्तभोगिनः ॥ ८ ॥

अस्ति वस्त्विदमित्थंत्वप्रसंख्यानपराङ्मुखम् । श्रीमत्यायतने लक्ष्मीपदलाक्षैकलक्षणम् ॥ ९ ॥

लक्ष्मीकल्पलतोत्तुङ्गस्तनस्तबकचञ्चलः । श्रीरङ्गराजभृङ्गो मे रमतां मानसाम्बुजे ॥ १० ॥

स्वस्ति श्रीस्तनकस्तूरीमकरीमुद्रितोरसः । श्रीरङ्गराजाच्छरदश्शतमाशास्महेतमाम् ॥ ११ ॥

पातु प्रणतरक्षायां विलम्बमसहन्निव । सदा पञ्चायुधीं बिभ्रत्स नः श्रीरङ्गनायकः ॥ १२ ॥

अमतं मतं मतमथामतं स्तुतं परिनिन्दितं भवति निन्दितं स्तुतम् ।
इति रङ्गराजमुदजूघुषत्त्रयी स्तुमहे वयं किमिति तन्न शक्नुमः ॥ १३ ॥

यदि मे सहस्रवदनादिवैभवं निजमर्पयेत्स किल रङ्गचन्द्रमाः ।
अथ शेषवन्मम च तद्वदेव वा स्तुतिशक्त्यभावविभवेऽपि भागिता ॥ १४ ॥

सो अङ्ग! वेद यदि वा न किलेति वेदस्सन्देग्ध्यनर्घविदमात्मनि रङ्गनाथम् ।
स्थाने(य)तदेष खलु दोषमलीमसाभिर्मद्वाग्भिरैशमतिशायनमावृणोति ॥ १५ ॥

स्वं संस्कृतद्राविडवेदसूक्तैर्भान्तं मदुक्तैर्मलिनीकरोति । श्रीरङ्गकम्रः कलभं क एव स्नात्वाऽपि धूलीरसिकं निषेद्धा ॥

किन्तु प्रपत्तिबलतारितविष्णुमायमद्वंश्यराजकुलदुर्ललितं किलैवम् ।
श्रीरङ्गराजकमलापदलालितत्वं यद्वाऽपराध्यति मम स्तुतिसाहसेऽस्मिन् ॥ १७ ॥

नाथस्य च स्वमहिमार्णवपारदृश्वविज्ञानवाग्विलसितं सहते न वेदः ।
आपेक्षिकं यदि तदस्ति ममापि तेन श्रीरङ्गिणस्स्तुतिविधावहमध्यकार्षम् ॥ १८ ॥

अन्यत्वात्तद्गुणोक्तिर्भगवति न तदुत्कर्षचौर्यैः परेषां स्तुत्यत्वाद्यावदर्था फणितिरपि तथा तस्य निस्सीमकत्वात् ।
आम्नायानामसीम्नामपि हरिविभवे वर्षबिन्दोरिवाब्धौ संबन्धात्स्वात्मलाभो न तु कवलनतः स्तोतुरेवं न किं मे ॥१९॥

कावेरीमवगाहिषीय भगवद्भोगान्तरायीभवत्कर्मक्लेशफलाशयप्रशमनोद्वेलामलस्रोतसम् ।
जन्तोस्संसरतोऽचिरादिसरणिव्यासङ्गभङ्गाय या लोकेऽस्मिन् विरजेव वेल्लितजला श्रीरङ्गमालिङ्गति ॥२०॥

दुग्धाब्धिर्जनको जनन्यहमियं श्रीरेव पुत्री वरश्श्रीरङ्गेश्वर एतदर्हमिह किं कुर्यामितीवाकुला ।
चञ्चच्चामरचन्द्रचन्दनमहामाणिक्यमुक्तोत्करान् कावेरी लहरीकरैर्विदधती पर्येति सा सेव्यताम् ॥ २१ ॥

तीर्थं शुन्धति पाति नन्दनतरून् रथ्याङ्गणान्युक्षति स्नानीयार्हणपानवारि वहति स्नातः पुनीते जनान् ।
श्यामं वेदरहो व्यनक्ति पुलिने फेनैर्हसन्तीव तद्गङ्गां विष्णुपदीत्वमात्रमुखरां हेमापगा हन्त्वघम् ॥ २२ ॥

अगणितगुणावद्यं सर्वं स्थिरत्रसमप्रतिक्रियमपि पयःपूरैराप्याययन्त्यनुजाग्रती ।
प्रवहति जगद्धात्री भूत्वेव रङ्गपतेर्दया शिशिरमधुराऽगाधा सा नः पुनातु मरुद्वृधा ॥ २३ ॥

तरलतनुतरङ्गैर्मन्दमान्दोल्यमानस्वतटविटपिराजीमञ्जरीसुप्तभृङ्गा ।
क्षिपतु कनकनाम्नी निम्नगा नारिकेलक्रमुकजमकरन्दैर्मांसलापा मदंहः ॥ २४ ॥

कदलवकुलजम्बूपूगमाकन्दकण्ठद्वयससरसनीरामन्तरा सह्यकन्याम् ।
प्रबलजलपिपासालम्बमानाम्बुदौघभ्रमकरतरुबृन्दं वन्द्यतामन्तरीपम् ॥ २७ ॥

यद्विष्णोः पदमतमः परोरजोऽग्र्यं मुक्तानामनुविरजं विदीप्रमाहुः ।
तत्पुण्यं पुलिनमिदंतयाऽद्य मध्येकावेरि स्फुरति तदीक्षिषीय नित्यम् ॥ २६ ॥

त्वय्यन्त्रप्रहतिमतीषु वैष्णवानां प्राप्यासु प्रचुरभवश्रमापहासु ।
कावेरीपरिचरितासु पावनीषु श्रीरङ्गोपवनतटीषु वर्तिषीय ॥ २७ ॥

स्फुरितशफरदीर्घन्नालिकेरीगुलुच्छप्रसृमरमधुकुल्यावर्धितानोकहानि ।
रतिमविरति रङ्गारामरम्यस्थलानि क्रमुकपनसमोचामेचकानि क्रियासुः ॥ २८ ॥

अधिपरमपदं पुरीमयोध्याममृतवृतामपराजितामुशन्ति। पुलिनमुपरि रङ्गराजधानी पिशितदशामपि सा पुरश्चकास्ति ॥

भवपदमपि दिव्यधाम कर्तुं तदुभयतन्त्रितहर्म्यमालिकेव । भवनमणितलैर्विजृम्भमाणा जयतितरामिह रङ्गराजधानी ॥

मणिमकररुचीर्वितत्य पाशान् विसृमरकेतुकरैर्मृगं हिमांशोः। श्रिय इव नवकेलये जिघृक्षुस्सुखयतु रङ्गपुरी चकासती नः॥

जनपदसरिदन्तरीपपुष्यत्पुरपरिपालननित्यजागरूकान् ।
प्रहरणपरिवारवाहनाढ्यान् कुमुदमुखान् गणनायकान् नमामि ॥

अहृतसहजदास्याः सूरयस्स्रस्तबन्धा विमलचरमदेहा इत्यमी रङ्गधाम ।
महितमनुजतिर्यक्स्थावरत्वाऽऽश्रयन्ते सुनियतमिति ह स्म प्राहुरेभ्यो नमः स्तात् ॥ ३३ ॥

श्रीरङ्गदिव्यभवनं भुवि गोपुराणां प्राकारितेन निकरेण गरुत्मतेव ।
पार्श्वप्रसारितपतत्रपुटेन भक्त्या नानातनूभिरुपगूढमुपाश्रयामः ॥ ३४ ॥

प्राकारमध्याजिरमण्डपोक्त्या सद्वीपरत्नाकररत्नशैला । सर्वंसहा रङ्गविमानसेवां प्राप्तेव तन्मन्दिरमाविरस्ति ॥ ३५ ॥

जितबाह्यजिनादिमणिप्रतिमा अपि वैदिकयन्निव रङ्गपुरे। मणिमण्डपवप्रगणान् विदधे परकालकविः प्रणमेमहि तान् ॥

स्मेराननाक्षिकमलैर्नमतः पुनानान् दंष्ट्रागदाभ्रुकुटिभिर्द्विषतो धुनानान् ।
चण्डप्रचण्डमुखतः प्रणमामि रङ्गद्वारावलीषु चतसृष्वधिकारभाजः ॥ ३७ ॥

सर्वात्मसाधारणनाथगोष्ठीपूरेऽपि दुष्पूरमहावकाशम् । आस्थानमानन्दमयं सहस्रस्थूणादिनाऽऽम्नातमवाप्नवानि ॥

विहरति हरौ लक्ष्म्या लीलातपत्रपरिष्क्रियाविनिमयविधासूनासूनिक्रियासफलोत्पलाम् ।
अथ मुनिमनःपद्मेष्वब्जासहायविहारजश्रमहरतटीं यामस्तामैन्दवीमरविन्दिनीम् ॥ ३९ ॥

तापत्रयीमैन्दवपुष्करिण्यां निमज्य निर्वापयिताऽस्मि यस्याः। अभ्यासतोऽपामघमर्षणीनां चन्द्रस्सुधादीधितितामवाप ॥

पूर्वेण तां तद्वदुदारनिम्नप्रसन्नशीताशयमन्ननाथाः । पराङ्कुशाद्याः प्रथमे पुमांसो निवेदिवांसो दश मां दयेरन् ॥

आधारशक्तिमुपरि प्रकृतिं परेण तां कूर्ममत्र फणिनं पृथिवीं फणासु ।
पृथ्व्यां पयोधिमधितन्नलिनं निधाय श्रीरङ्गधाम सुनिविष्टमभिष्टवानि ॥ ४२ ॥

परेण नाकं पुरि हेममय्यां यो ब्रह्मकोशोऽस्त्यपराजिताख्यः। श्रीरङ्गनाम्ना तमपौरुषेयं विमानराजं भुवि भावयानि ॥

अनाद्याम्नातत्वात्पुरुषरचनादोषरहितं जने तांस्तान् कामान् विदधदपि सायुज्यहृदयम् ।
असन्देहाध्यासं भगवदुपलम्भस्थलममी प्रतीमः श्रीरङ्गं श्रुतिशतसमानर्द्धि शरणम् ॥ ४४ ॥

अपि फणिपतिभावाच्छुभ्रमन्तश्शयालोर्मरकतसुकुमारैः रङ्गभर्तुर्मयूखैः ।
सकलजलधिपानश्यामजीमूतजैत्रं पुलकयति विमानं पावनं लोचने नः ॥ ४५ ॥

व्यापि रूपमपि गोष्पदयित्वा भक्तवत्सलतयोज्झितवेलम् । तद्द्विषन्तपनृकेसरिरूपं गोपुरोपरि विजृम्भितमीडे ॥

अहमलमवलम्बस्सीदतामित्यजस्रं निवसदुपरिभागे गोपुरं रङ्गधाम्नः ।
क्वचन नृपरिपाटीवासितं क्वापि सिंहक्रमसुरभितमेकं ज्योतिरग्रे चकास्ति ॥ ४७ ॥

संशोध्य पावनमनोहरदृष्टिपातैर्देवाय मामपि निवेदयतां गुरूणाम् ।
सव्योत्तरे भगवतोऽस्य कटाक्षवीक्षापङ्क्तिं प्रपद्य परितः परितो भवेयम् ॥ ४८ ॥

श्रीरङ्गराजकरनम्रितशाखिकाभ्यो लक्ष्म्या स्वहस्तकलितश्रवणावतंसम् ।
पुन्नागतल्लजमजस्रसहस्रगीतिसेकोत्थदिव्यनिजसौरभमामनामः ॥ ४९ ॥

श्रीरङ्गचन्द्रमसमिन्दिरया विहर्तुं विन्यस्य विश्वचिदचिन्नयनाधिकारम् ।
यो निर्वहत्यनिशमङ्गुलिमुद्रयैव सेनान्यमन्यविमुखास्तमशिश्रियाम ॥ ५० ॥

सैन्यधुरीणप्राणसहायां सूत्रवतीमाशिश्रियमम्बाम् । श्रीपदलाक्षलाञ्छितसेवाप्रोतलसद्दोर्वल्लिविलासाम् ॥ ५१ ॥

विदधतु सुखं विष्वक्सेनस्य ते प्रथमे भटाः करिमुखजयत्सेनौ कालाह्वसिंहमुखौ च नः ।
जगति भजतां तत्तत्प्रत्यूहतूलदवानलाः दिशिदिशि दिवारात्रं श्रीरङ्गपालनकर्मठाः ॥ ५२ ॥

श्रुतिमयमतिहर्षप्रश्रयस्मेरवक्त्रं मणिमुकुरमिवाग्रे मङ्गलं रङ्गधाम्नः ।
शरणमभिगताः स्मो यत्र रूपस्वरूपस्वगुणमहिमदर्शी मोदते रङ्गशायी ॥ ५३ ॥

तार्क्ष्यपक्षतिविदस्य वल्लभां रुद्रया सह सुकीर्तिमर्चये । हर्षबाष्पमपि कीर्तिमर्थिनां यन्मुखेन कमला कटाक्षयेत् ॥

स्वास्त्ररूपस्फुरन्मौलि मा शब्द इत्युद्धुनानां सुरांस्तर्जनीमुद्रया ।
नाथनिद्रोचितोन्निद्रताम्रेक्षणां सञ्चरन्तीं स्तुमस्तां च पञ्चायुधीम् ॥ ५५ ॥

अस्त्रग्रामाग्रेसरं नाथवीक्षाशीधुक्षीबोद्वेलनृत्ताभिरामम् । चक्रं दैत्यच्छेदकल्माषिताङ्गं भ्राम्यज्ज्वालामालभारि प्रपद्ये ॥

हनुभूपविभीषणयोः स्यां यतमाविह मोक्षमुपेक्ष्य । रघुनायकनिष्क्रयभूतं भुवि रङ्गधनं रमयेते ॥ ५७ ॥

इतो बहिः पञ्च पराञ्चि खानि प्रत्यञ्चि तानि स्युरितोऽन्तरित्थम् । औपाधिकेभ्यो निरुपाधिभोग्ये प्रत्याहरद्वेत्रवरं व्रजामि ॥

शेषशयलोचनामृतनदीरयाकुलितलोलमानानाम् । आलम्बमिवामोदस्तम्भद्वयमन्तरङ्गमभियामः ॥ ५९ ॥

श्रीरङ्गान्तर्मन्दिरं दीप्रशेषं श्रीभूमीतद्रम्यजामातृगर्भम् । पश्येम श्रीदिव्यमाणिक्यभूषामञ्जूषायास्तुल्यमुन्मीलितायाः ॥

लीलालताकृपाणीभृङ्गारपतद्ग्रहार्पितकराग्राः । प्रोतावतंससितकुचाः पदाब्जसंवाहिनीर्वयं स्तुमहे ॥ ६१ ॥

मुकुलितनलिनास्सकौमुदीका इव सुनिशा विमलादिका नवापि ।
शिरसि कृतनमस्यदेकहस्ता इतरकरोच्चलचामराः श्रयेयम् ॥ ६२ ॥

उत्फुल्लपङ्कजतटाकमिवोपयानि श्रीरङ्गराजमिह दक्षिणसव्यसीम्नोः ।
लक्ष्मीं विहाररसिकामिव राजहंसीं छायामिवाभ्युदयिनीमवनीं च तस्याः ॥ ६३ ॥

पिब नयन! पुरस्ते रङ्गधुर्याभिधानं स्थितमिव परिफुल्लत्पुण्डरीकं तटाकम् ।
श्रियमपि विहरन्तीं राजहंसीमिवास्मिन् प्रतिफलनमिवास्याः पश्य विश्वंभरां च ॥ ६४ ॥

सौशील्यशीतलमवेलकृपातरङ्गसंप्लाविताखिलमकृत्रिमभूम निम्नम् ।
लक्ष्म्या च वासितमभूम विगाहमानाः श्रीरङ्गराजमिषपद्मसरः प्रसन्नम् ॥ ६५ ॥

सिंहासने कमलया क्षमया च विश्वमेकातपत्रयितुमस्मदसून्निषण्णम् ।
लक्ष्मीस्वयंवरसनाथितयौवनश्रीसौन्दर्यसंपदवलिप्तमिवालिहीय ॥ ६६ ॥

आपादमूलमणिमौलि समुल्लसन्त्या स्वातन्त्र्यसौहृदतरङ्गितयाऽङ्गभङ्ग्या ।
सख्यं समस्तजनचेतसि सन्दधानं श्रीरङ्गराजमनिमेषमनुस्रियास्म ॥ ६७ ॥

क्षितिकमलनिवासाकल्पवल्लीसलीलोल्लुठनदशादिशोद्यद्यौवनारम्भजृम्भः ।
श्रममपहरतां मे रङ्गधामेति तत्तद्वरमयफलनम्रः पत्रलः पारिजातः ॥ ६८ ॥

संभाषमाणमिव सर्ववशंवदेन मन्दस्मितेन मधुरेण च वीक्षणेन ।
दिव्यास्त्रपुष्पितचतुर्भुजमत्युदारं रङ्गास्पदं मम शुभाश्रयमाश्रयाणि ॥ ६९ ॥

एते शङ्खगदासुदर्शनभृतः क्षेमंकरा बाहवः पादद्वन्द्वमिदं शरण्यमभयं भद्रं च वो हे जनाः ।
इत्यूचुष्यभयङ्करे करतले स्मेरेण वक्त्रेण तद्व्याकुर्वन्निव निर्वहेन्मम धुरं श्रीरङ्गसर्वंसहः ॥ ७० ॥

अङ्गैरहंप्रथमिकाचरितात्मदानैरामोदमाननवयौवनसावलेपैः ।
हे ! पारिजातमिव नूतनतायमानशाखाशतं (हृदि दधी) कथमधीमहि रङ्गधुर्यम् ॥ ७१ ॥

आलोका हृदयालवो रसवशादीशानमीषत्स्मितं प्रच्छायानि वचांसि पद्मनिलयाचेतश्शरव्यं वपुः ।
चक्षुष्मन्ति गतागतानि त इमे श्रीरङ्गशृङ्गार ! ते भावा यौवनगन्धिनः किमपरं सिञ्चन्ति चेतांसि नः ॥ ७२ ॥

आयत्किरीटमलिकोल्लसदूर्ध्वपुण्ड्रमाकर्णलोचनमनङ्कुशकर्णपाशम् ।
उत्फुल्लवक्षसमुदायुधबाहुमर्हन्नीवि च रङ्गपतिमब्जपदं भजामः ॥ ७३ ॥

अब्जन्यस्तपदाब्जमञ्चितकटीसंवादिकौशेयकं किञ्चित्ताण्डवगन्धिसंहननकं निर्व्याजमन्दस्मितम् ।
चूडाचुम्बिमुखाम्बुजं निजभुजाविश्रान्तदिव्यायुधं श्रीरङ्गे शरदश्शतं तत इतः पश्येम लक्ष्मीसखम् ॥ ७४॥

अग्रे तार्क्ष्येण पश्चादहिपतिशयनेनात्मना पार्श्वयोश्च श्रीभूमिभ्यामतृप्त्या नयनचुलकनैस्सेव्यमानामृतौघम् ।
वक्त्रेणाधिःस्मितेन स्फुरदभयगदाशङ्खचक्रैर्भुजाग्रैर्विश्वस्मै तिष्ठमानं शरणमशरणा रङ्गराजं भजामः ॥ ७५ ॥

आर्तापाश्रयमर्थिकल्पकमसह्यागस्करक्ष्मातलं सद्यस्संश्रितकामधेनुमभियत्सर्वस्वमस्मद्धनम् ।
श्रीरङ्गेश्वरमाश्रयेम कमलाचक्षुर्महीजीवितं श्रीरङ्गे स सुखाकरोतु सुचिरं दास्यं च धत्तां मयि ॥ ७६ ॥

स्वफणवितानदीप्रमणिमालिसुदामरुचिम्रदिमसुगन्धिभोगसुखशायितरङ्गधनम् ।
मदभरमन्थरोच्छ्रुसितनिश्श्वसितोत्तरलं फणिपतिडोलिकातलिममाश्वसिमः प्रणताः ॥ ७७ ॥

घटदलदेवकीजठरवेदशिरःकमलास्तनशठकोपवाग्वपुषि रङ्गगृहे शयितम् ।
वरदमुदारदीर्घभुजलोचनसंहननं पुरुषमुपासिषीय परमं प्रणतार्तिहरम् ॥ ७८ ॥

उदधिपरमव्योम्नोर्विस्मृत्य पद्मवनालयाविनिमयमयीं निद्रां श्रीरङ्गनामनि धामनि ।
फणिपरिबृढस्फारप्रश्वासनिःश्वसितक्रमस्खलितनयनं तन्वन् मन्वीत नः परमः पुमान् ॥ ७९ ॥

जलधिमिव निपीतं नीरदेनाद्रिमब्धौ निहितमिव शयानं कुञ्जरं वाऽद्रिकुञ्जे ।
कमलपदकराक्षं मेचकं धाम्नि नीले फणिनमधिशयानं पूरुषं वन्दिषीय ॥ ८० ॥

श्रीरङ्गेशय इह शर्म निर्मिमीतामाताम्राधरपदपाणिविद्रुमो नः ।
कावेरीलहरिकरोपलाल्यमानो गम्भीराद्भुत इव तर्णकोऽर्णवस्य ॥ ८१ ॥

सिञ्चेदिमं च जनमिन्दिरया तटित्वान् भूषामणिद्युतिभिरिन्द्रधनुर्दधानः ।
श्रीरङ्गधामनि दयारसनिर्भरत्वादद्रौ शयालुरिव शीतलकालमेघः ॥ ८२ ॥

आमौलिरत्नमकरात्पुनरा च पद्भ्यां धामक्रमोन्नमदुदारमनोहराङ्गम् ।
श्रीरङ्गशेषशयनं नयनैः पिबामः पश्यन्मनःप्रवणमोघमिवामृतस्य ॥ ८३ ॥

अरविन्दितमङ्घ्रिपाणिवक्त्रैरपि तापिञ्छितमञ्चिताङ्गकान्त्या। अधरेण च बन्धुजीवितं श्रीः नियतं नन्दनयेत रङ्गचन्द्रम्॥

अन्योन्यरञ्जकरुचोऽनुपमानशोभाः दिव्यस्रगम्बरपरिष्करणाङ्गरागाः ।
संस्पर्शतः पुलकिता इव चिन्मयत्वाद्रङ्गेन्दुकान्तिमधिकामुपबृंहयन्ति ॥ ८५ ॥

द्रुतकनकजगिरिपरिमिलदुदधिप्रचलितलहरिवदहमहमिकया ।
स्नपयति जनमिममपहरति तमः फणिशयमरतकमणिकिरणगणः ॥ ८६ ॥

भोगीन्द्रनिःश्वसितसौरभवर्धितं श्रीनित्यानुषक्तपरमेश्वरभावगन्धि ।
सौरभ्यमाप्लुतदिशावधि रङ्गनेतुरानन्दसंपदि निमज्जयते मनांसि ॥ ८७ ॥

रङ्गभर्तुरपि लोचनचर्चां साहसावलिषु लेखयमानम् । पुष्पहास इति नाम दुहानं सौकुमार्यमतिवाङ्मनसं नः ॥ ८८ ॥

एकैकस्मिन्परमवयवेऽनन्तसौन्दर्यमग्नं सर्वं द्रक्ष्ये कथमिति मुधा मामथा मन्दचक्षुः ।
त्वां सौभ्रात्रव्यतिकरकरं रङ्गराजाङ्गकानां तल्लावण्यं परिणमयिता विश्वपारीणवृत्ति ॥ ८९ ॥

वपुर्मन्दारस्य प्रथमकुसुमोल्लाससमयः क्षमालक्ष्मीभृङ्गीसकलकरणोन्मादनमधु ।
विकासस्सौन्दर्यस्रजि रसिकताशीधुचुलको युवत्वं रङ्गेन्दोस्सुरभयति नित्यं सुभगताम् ॥ ९० ॥

किरीटचूडरत्नराजिराधिराज्यजल्पिका । मुखेन्दुकान्तिरुन्मुखं तरङ्गितेव रङ्गिणः ॥ ९१ ॥

शिखारत्नोद्दीप्रं दिशिदिशि च माणिक्यमकरीलसच्छृङ्गं रङ्गप्रभुमणिकिरीटं मनुमहे ।
समुत्तुङ्गस्फीतं चिदचिदधिराजश्रिय इव प्रियाक्रीडं चूडामणिमपि नितम्बं तमभितः ॥ ९२ ॥

विहरतु मयि रङ्गिणश्चूलिकाभ्रमरकतिलकोर्ध्वपुण्ड्रोज्ज्वलम् । मुखममृततटाकचन्द्राम्बुजस्मयहरशुचिमुग्धमन्दस्मितम्॥

मुखपुण्डरीकमुपरि त्रिकण्टकं तिलकाश्च केसरसमास्समौक्तिकाः। इहरङ्गभर्तुरमियन्मधुव्रतप्रकरश्रियं भ्रमरकाणिबिभ्रति॥

हृदयं प्रसा(ध)दयति रङ्गपतेः मधुरोर्ध्वपुण्ड्रतिलकं ललितम् । अलिकार्धचन्द्रदलसंवलिताममृतस्रुतिं यदभिशङ्कयते ॥

सरसीरुहे समवनाम्य मदादुपरि प्रनृत्यदलिपंक्तिनिभे । स्फुरतो भ्रुवावुपरि लोचनयोः सविलासलास्यगति रङ्गभृतः ॥

स्मरशरनलिनभ्रमान्नेत्रयोः परिसरनमदिक्षुचापच्छवि । युगमुदयति रङ्गभर्तुर्भ्रुवोः गुरुकुलमिव शार्ङ्गनृत्तश्रियः ॥ ९७ ॥

कृपया परया करिष्यमाणे सकलाङ्गं किल सर्वतोऽक्षि नेत्रे। प्रथमं श्रवसी समास्तृणाते इति दैर्घ्येण विदन्ति रङ्गनेतुः ॥

श्रवोनासारोधात्तदवधिकडोलायितगते विशालस्फीतायद्रुचिरशिशिरातास्रधवले ।
मिथोबद्धस्पर्धस्फुरितशफरद्वन्द्वललिते क्रियास्तां श्रीरङ्गप्रणयिनयनाब्जे मयि दयाम् ॥ ९९ ॥

करुणामृतकूलमुद्वहैषा प्रणमत्स्वागतिकी प्रसन्नशीता ।
मयि रङ्गधनोपकर्णिकाऽक्ष्णोः सरितोर्वीक्षणविचिसन्ततिःस्तात् ॥ १०० ॥

विलसति नासा कल्पकवल्ली मुग्धेव रङ्गनिलयस्य। स्मितमपि तन्नवकुसुमं चुबुककपोलं च पल्लवोल्लसितम्॥ १०१ ॥

नयनशफरविद्धौ कर्णपाशावरुद्धौ रुच इव लुठतोऽर्चिर्मञ्जरीरुद्गिरन्तौ ।
परिमिलदलकालीशैवलामंसवेलां अनुमणिमकरोद्धौ रङ्गधुर्यामृताब्धेः ॥ १०२ ॥

अधरमधुराम्भोजं तत्कर्णपाशमृणालिकावलयमभि मामास्तां रङ्गेन्दुवक्त्रसरश्चिरम् ।
नयनशफरं नासाशैवालवल्लरि कर्णिकामकरमलकश्रेणीपर्यन्तनीलवनावलि ॥ १०३ ॥

रमयतु स मां कण्ठः श्रीरङ्गनेतुरुदञ्चितक्रमुकतरुणग्रीवाकम्बुप्रलम्बमलिम्लुचः ।
प्रणयविलगल्लक्ष्मीविश्वंभराकरकन्दलीकनकवलयक्रीडासंक्रान्तरेख इवोल्लसन् ॥ १०४ ॥

अधिष्ठानस्तम्भौ भुवनपृथुयन्त्रस्य कमलाकरेणोरालाने अरिकरिघटोन्माथमुसलौ ।
फणीन्द्रस्फीतस्रग्व्यतिकरितसन्दिग्धविभवौ भुजौ मे भूयास्तामभयमभि रङ्गप्रणयिनः ॥ १०५ ॥

प्रतिजलधितो वेलाशय्यां विभीषणकौतुकात् पुनरिव पुरस्कर्तुं श्रीरङ्गिणः फणिपुङ्गवे ।
समुपदधतः कञ्चित्कञ्चित्प्रसारयतो भुजद्वयमपि सदा दानश्रद्धालु दीर्घमुपास्महे ॥ १०६ ॥

कुसुमभरालसौ स्फटिकवेदिशयौ विटपावमरतरोः परं परिहसत् पृथु रङ्गभुजः ।
बहुमणिमुद्रिकाकनककङ्कणदोर्वलयैः किसलयि दोर्द्वयं फणिनि निर्भरसुप्तमिमः ॥ १०७ ॥

मद्रक्षाव्रतकौतुके सुकटके विक्रान्तिकर्णेजपे शार्ङ्गज्याकिणकर्कशिम्नि सुमनस्स्रङ्मोहने मार्दवे ।
दोर्द्वन्द्वं बहुशः प्रलोभ्य कमलालीलोपधानं भवत्तच्चित्रालकमुद्रितं विजयते श्रीरङ्गसंसङ्गिनः ॥ १०८॥

भवार्तानां वक्त्रामृतसरसि मार्गं दिशदिव स्वयं वक्त्रेणेदं वरदमिति सन्दर्शितमिव ।
कराम्भोजं पङ्केरुहवनरुषा पाटलमिव श्रयामि श्रीरङ्गेशयितुरुपधानीकृतमहम् ॥ १०९ ॥

किरीटं श्रीरङ्गेशमितुरुपधानीकृतभुजः विधीशाधीशत्वाद्धटत इति संस्पृश्य वदति ।
निहीनानां मुख्यं शरणमिति बाहुस्तदितरः स्फुटं ब्रूते पादाम्बुजयुगलमाजानुनिहितः ॥ ११० ॥

मलयजशशिलिप्तं मालतीदामतल्पं सुमणिसरवितानं कौस्तुभस्वस्तिदीपम् ।
दनुजवृषविषाणोल्लेखचित्रं च लक्ष्मीललितगृहमुपासे रङ्गसर्वंसहोरः ॥ १११ ॥

हारस्फारितफेनमंजुलहरीमालर्द्धि मुक्ताफलश्रेणीशीकरदुर्दिनं तत इतो व्याकीर्णरत्नोत्करम् ।
आविःकौस्तुभलक्ष्मि रङ्गवसतेर्निस्सीमभूमाद्भुतं वक्षो मन्दरमथ्यमानजलधिश्लाघं विलोकेमहि ॥ ११२ ॥

वक्षःस्थल्यां तुलसिकमलाकौस्तुभैर्वैजयन्ती सर्वेशत्वं कथयतितरां रङ्गधाम्नस्तदास्ताम् ।
कूर्मव्याघ्रीनखपरिमिलत्पञ्चहेती यशोदानद्धा मौग्ध्याभरणमधिकं नस्समाधिं धिनोति ॥ ११३ ॥

किया‍न् भरो मम जगदण्डमण्डलीत्यतृप्तितः कृशितमिवोदरं विभोः ।
रिरक्षिषोचितजगतीपरम्परां परामिव प्रथयति नाभिपङ्कजम् ॥ ११४ ॥

त्रिविधचिदचिद्वृन्दं तुन्दावलम्बिवलित्रयं विगणयदिवैश्वर्यं व्याख्याति रङ्गमहेशितुः ।
प्रणतवशतां ब्रूते दामोदरत्वकरः किणः तदुभयगुणाकृष्टं पट्टं किलोदरबन्धनम् ॥ ११५ ॥

त्रयो देवास्तुल्यास्त्रितयमिदमद्वैतमधिकं त्रिकादस्मात्तत्त्वं परमिति वितर्कान् विघटयन् ।
विभोर्नाभीपद्मो विधिशिवनिदानं भगवतस्तदन्यद्भ्रूभङ्गीपरवदिति सिद्धान्तयति नः ॥ ११६ ॥

गर्भे कृत्वा गोप्तुमनन्तं जगदन्तर्मज्जद्रम्या वाञ्छति साम्यं ननु नाभिः ।
उत्क्षिप्यैतत्प्रेक्षितुमुद्यद्भ्रमिभूयं नाभीपद्मो रंहति रङ्गायतनाब्धेः ॥ ११७ ॥

मदमिव मधुकैटभस्य रम्भाकरभकरीन्द्रकराभिरूप्यदर्पम् ।
स्फुटमिव परिभूय गर्वगुर्वीः किमुपममीमहि रङ्गकुञ्जरोर्वोः ॥ ११८ ॥

कटीकान्तिसंवादिचातुर्यनीवीलसद्रत्नकाञ्चीकलापानुलेपम् ।
महाभ्रंलिहन्मेरुमाणिक्यसानूरिवाभाति पीताम्बरं रङ्गबन्धोः ॥ ११९ ॥

भर्मस्थलांशुपरिवेष इवाम्बुराशेस्सन्ध्याम्बुवाहनिकुरुम्बमिवाम्बरस्य ।
शम्पाकदम्बकमिवाम्बुमुचो मनो नः पीताम्बरं पिबति रङ्गधुरन्धरस्य ॥ १२० ॥

वैभूषण्यां कान्तिराङ्गी निमग्ना विष्वद्रीची क्वापि सोन्मादवृत्तिः । जाने जानुद्वन्द्ववार्ताविवर्तो जातःश्रीमद्रङ्गतुङ्गालयस्य॥

श्रीरङ्गेशयजङ्घे श्रीभूम्यामर्शहर्षकण्टकिते । तत्केलिनलिनमांसलनालद्वयललितमाचरतः ॥ १२२ ॥

वन्दारुबृन्दारकमौलिमालायुञ्जानचेतःकमलाकरेभ्यः । संक्रान्तरागाविव पादपद्मौ श्रीरङ्गभर्तुर्मनवै नवै च ॥ १२३ ॥

यद्वृन्दावनप[illegible]दधिरवैर्यत्ताण्डवं शिक्षितं यल्लक्ष्मीकरसौख्यसाक्षि जलजप्रस्पर्धमानर्द्धि यत् ।
यद्भक्तेष्वजलस्थलक्षमपि यद्रूत्यप्रसङ्गोत्सुकं तद्विष्णोः परमं पदं वहतु नः श्रीरङ्गिणो मङ्गलम् ॥ १२४ ॥

शिञ्जानश्रुतिशिञ्जिनीमणिरवैर्वज्रारविन्दध्वजच्छत्रीकल्पकशङ्खचक्रमुकुरैस्तैस्तैश्च रेखामयैः ।
ऐश्वर्येण जयं त्रिविक्रममुखं घुष्यद्भिराम्रेडितं श्रीरङ्गेशयपादपङ्कजयुगं वन्दामहे सुन्दरम् ॥ १२५ ॥

पुनानि भुवनान्यहं बहुमुखीति सर्वाङ्गुलीझलज्झलितजाह्नवीलहरिबृन्दसन्देहदाः ।
दिवा निशि च रङ्गिणश्चरणचारुकल्पद्रुमप्रवालनवमञ्जरीः नखरुचीर्विगाहेमहि ॥ १२६ ॥

श्रीरङ्गेन्दोः पदकिसलये नीलमञ्जीरमैत्र्या वन्दे वृन्तप्रणयिमधुपव्रातराजीवजैत्रे ।
नित्याभ्यर्चानतविधिमुखस्तोमसंशय्यमानैः हेमाम्भोजैर्निबिडनिकटे रामसीतोपनीतैः ॥ १२७ ॥

॥ इति श्रीरङ्गराजस्तवे पूर्वशतकं समाप्तम् ॥

श्रीपराशरभट्टार्यैरनुगृहीते

# ॥ श्रीरङ्गराजस्तवे उत्तरशतकम् ॥

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः । श्रीवत्साङ्कसुतःश्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

हर्तुं तमस्सदसती च विवेक्तुमीशो मानं प्रदीपमिव कारुणिको ददाति ।
तेनावलोक्य कृतिनः परिभुञ्जते तं तत्रैव केऽपि चपलाश्शलभीभवन्ति ॥ १ ॥

या वेदबाह्याः स्मृतयोऽर्हदादेर्वेदेषु याः काश्च कुदृष्टयस्ताः ।
आगस्कृतां रङ्गनिधे! त्वदध्वन्यन्धङ्करण्यः स्मृतवान् मनुस्तत् ॥ २ ॥

प्रत्यक्षप्रमथनपश्यतोहरत्वान्निर्दोषश्रुतिविमतेश्च बाह्यवर्त्म ।
दुस्तर्कप्रभवतया च वक्तृदोषस्पृष्टया च प्रजहति रङ्गविन्द! वृद्धाः ॥ ३ ॥

अन्वयवितयेदङ्कुर्वाणैर्बहिष्करणैर्वपुर्निरवयवकोऽहङ्काराहः पुमान् करणातिगः ।
स्फुरति हि जनाः प्रत्यासत्तेरिमौ न विविञ्चते तदधिकुरुतां शास्त्रं रङ्गेश! ते परलोकिनि ॥ ४ ॥

प्रत्यक्षा श्रुतिरर्थधीश्च न तथा दोषास्तदर्थः पुनः धर्माधर्मपरावरेश्वरमुखः प्रत्यक्षबाध्यो न च ।
तच्चार्वाकमतेऽपि रङ्गरमण! प्रत्यक्षवत् सा प्रमा योगोन्मीलितधीस्तदर्थमथवा प्रत्यज्ञमीक्षेत सः ॥ ५ ॥

न सदसदुभयं वा नोभयस्माद्बहिर्वा जगदिति न किलैकां कोटिमाटीकते तत् ।
इति निरुपधि सर्वंसर्विकातो निषेधन् वरद! सुगतपाशश्चोरलावं विलाव्यः ॥ ६ ॥

प्रतीतिश्चेदिष्टा न निखिलनिषेधो यदि न को निषेद्धाऽतो नेष्टो निरुपधिनिषेधस्सदुपधौ ।
निषेधेऽन्यत्सिध्येद् वरद! घटभङ्गे शकलवत् प्रमाशून्ये पक्षे श्रुतिरपि मतेऽस्मिन्विजयताम् ॥ ७ ॥

योगाचारो जगदपलपत्यत्र सौत्रान्तिकस्तद्धीवैचित्र्यादनुमितिपदं वक्ति वैभाषिकस्तु ।
प्रत्यक्षं तत्क्षणिकयति ते रङ्गनाथ! त्रयोऽपि ज्ञानात्मत्वक्षणभिदुरते चक्षते तान् क्षिपामः ॥ ८ ॥

जगद्भङ्गुरं भङ्गुरा बुद्धिरात्मेत्यसद्वेत्त्रभावे तथा वेद्यवित्त्योः। क्षणध्वंसतश्च स्मृतिप्रत्यभिज्ञादरिद्रं जगत्स्यादिदं रङ्गचन्द्र !॥

अहमिदमभिवेद्मीत्यात्मवित्त्योर्विभेदे स्फुरति यदि तदैक्यं बाह्यमप्येकमस्तु ।
प्रमितिरपि मृषा स्यान्मेयमिथ्यात्ववादे यदि तदपि सहेरन् दीर्घमस्मन्मतायुः ॥ १० ॥

एतद्रामास्त्रं दलयतु कलिब्रह्ममीमांसकांश्च ज्ञप्तिर्ब्रह्मैतज्ज्वलदपि निजाविद्यया बम्भ्रमीति ।
तस्य भ्रान्तिं तां श्लथयति जिताद्वैतविद्यस्तु जीवो यद्यद् दृश्यं तद्वितथमिति ये ज्ञापयांचक्रुरज्ञाः ॥ ११ ॥

अङ्गीकृत्य तु सप्तभङ्गिकुसृतिं स्यादस्तिनास्त्यात्मिकां विश्वं त्वद्विभवं जगज्जिनमते नैकान्तमाचक्षते ।
भिन्नाभिन्नमिदं तथा जगदुषे वन्ध्या ममाम्बेतिवन्नूत्नब्रह्मविदे रहः परमिदं रङ्गेन्द्र! ते चक्षताम् ॥ १२ ॥

कणचरचरणाक्षौ भिक्षमाणौ कुतर्कैः श्रुतिशिरसि सुभिक्षं त्वज्जगत्कारणत्वम् ।
अणुषु विपरिणाम्य व्योमपूर्वं च कार्यं तव भवदनपेक्षं रङ्गभर्तुर्ब्रुवाते ॥ १३ ॥

वेदे कर्त्राद्यभावाद्बलवति हि नयैस्त्वन्मुखे नीयमाने तन्मूलत्वेन मानं तदितरदखिलं जायते रङ्गधामन्! ।
तस्मात्सांख्यं सयोगं सपशुपतिमतं कुत्रचित्पञ्चरात्रं सर्वत्रैव प्रमाणं तदिदमवगतं पञ्चमादेव वेदात् ॥ १४ ॥

सञ्चष्टे नेश्वरं त्वां पुरुषपरिषदि न्यस्य यद्वाऽऽन्यपर्यात् सांख्यो योगी च काका प्रतिफलनमिवैश्वर्यमूचे कयाचित् ।
भिक्षौ शैवस्सुराजम्भवनमभिमनुते रङ्गराजातिरागात् त्वां त्वामेवाभ्यधास्त्वं ननु परविभवव्यूहनाद्यम्भविष्णुम् ॥ १५॥

इति मोहनव(र्ष्म)र्त्मना त्वयापि प्रथितं बाह्यमतं तृणाय मन्ये । अथ वैदिकवर्मवर्मितानां मनिताहे कुदृशां किमीश ! वर्त्म ॥

संस्कारं प्रतिसञ्चरेषु निदधत्सर्गेषु तत्स्मारितं रूपं नाम च तत्तदर्हनिवहे व्याकृत्य रङ्गास्पद! ।
सुप्तोद्बुद्धविरिञ्चपूर्वजनतामध्याप्य तत्तद्धितं शासन्नस्मृतकर्तृकान् वहसि यद्वेदाः प्रमाणं ततः ॥ १७ ॥

शीक्षायां वर्णशिक्षा पदसमधिगमो व्याक्रियानिर्वचोभ्यां छन्दश्छन्दश्चितौ स्याद्गमयति समयं ज्यौतिषं रङ्गनाथ! ।
कल्पेऽनुष्ठानमुक्तं ह्युचितगमितयोर्न्यायमीमांसयोस्स्यात् अर्थव्यक्तिः पुराणस्मृतिषु तदनुगास्त्वां विचिन्वन्ति वेदाः ॥

आदौ वेदाः प्रमाणं स्मृतिरुपकुरुते सेतिहासैः पुराणैः न्यायैस्सार्धं त्वदर्चाविधिमुपरि परिक्षीयते पूर्वभागः ।
ऊर्ध्वो भागस्त्वदीहागुणविभवपरिज्ञापनैस्त्वत्पदाप्तौ वेद्यो वेदैश्च सर्वैरहमिति भगवन्! स्वेन च व्याचकर्थ ॥ १९ ॥

क्रिया तच्छक्तिर्वा किमपि तदपूर्वं पितृसुरप्रसादो वा कर्तुः फलद इति रङ्गेश! कुदृशः ।
त्वदर्चेष्टापूर्ते फलमपि भवत्प्रीतिजमिति त्रयीवृद्धास्तत्तद्विधिरपि भवत्प्रेरणमिति ॥ २० ॥

आज्ञा ते सनिमित्तनित्यविधयः स्वर्गादिकाम्यद्विधिः सोऽनुज्ञा शठचित्तशान्त्यशतोपायोऽभिचारश्रुतिः ।
सर्वीयस्य समस्तशासितुरहो! श्रीरङ्गसर्वस्व! ते रक्षाऽऽकूतनिवेदिनी श्रुतिरसौ त्वन्नित्यशास्तिस्ततः ॥ २१ ॥

अत्रास्ते निधिरितिवत्पुमर्थभूते सिद्धार्था अपि गुणरूपवृत्तवादाः ।
रङ्गेश! त्वयि सकलास्समन्वयन्ते नोपासाफलविधिभिर्विशेष एषाम् ॥ २२ ॥

देहो देहिनि कारणे विकृतयो जातिर्गुणाः कर्म च द्रव्ये निष्ठितरूपबुद्धिवचनास्तात्स्थ्यात् तथेदं जगत् ।
विश्वं त्वय्यभिमन्यसे जगदिषे तेनाद्वितीयस्ततः मायोपाधिविकारसङ्करकथा का नाम रङ्गेश्वर! ॥ २३ ॥

स्थित्युत्पत्तिप्रवृत्तिग्रसननियमनव्यापनैरात्मनस्ते शेषोऽशेषः प्रपञ्चो वपुरिति भवतस्तस्य चाभेदवादाः ।
सर्वं खल्वैतदात्म्यं सकलमिदमहं तत्त्वमस्येवमाद्याः व्याख्याता रङ्गधामप्रवण! विजयिभिर्वैदिकैस्सार्वभौमैः॥२४॥

सराजकमराजकं पुनरनेकराजं तथा यथाभिमतराजकं जगदिदं जजल्पुर्जडाः ।
जगाववशचित्रतातरतमत्वतर्काङ्किका श्रुतिश्चिदचिती त्वया वरद! नित्यराजन्वती ॥ २५ ॥

ब्रह्माद्यास्सृज्यवर्गे भ्रुकुटिभटतयोद्घाटिता नावतारप्रस्तावे तेन न त्वं न च तव सदृशा विश्वमेकातपत्रम् ।
लक्ष्मीनेत्रा त्वयेति श्रुतिमुनिवचनैस्त्वत्परैरर्पयामः श्रीरङ्गाम्भोधिचन्द्रोदय! जलमुचितं वादिकौतस्कुतेभ्यः ॥ २६ ॥

दोषोपधावधिसमातिशयानसंख्यानिर्लेपमङ्गलगुणौघदुघाष्षडेताः ।
ज्ञानैश्वरीशकनवीर्यबलार्चिषस्त्वां रङ्गेश! भास इव रत्नमनर्घयन्ति ॥ २७ ॥

युगपदनिशमक्षैः स्वैः स्वतो वाऽक्षकार्ये नियममनियमं वा प्राप्य रङ्गाधिराज! ।
करतलवदशेषं पश्यसि स्वप्रकाशं तदवरणममोघं ज्ञानमाम्नासिषुस्ते ॥ २८ ॥

नयनश्रवणो दशा शृणोषि अथ ते रङ्गपते! महेशितुः । करणैरपि कामकारिणः घटते सर्वपथीनमीक्षणम् ॥ २९ ॥

सार्वज्ञ्येनाङ्गमूलं जगदभिदधतो वारितास्साक्षिमात्रात् सांख्योक्तात्कारणं त्वां परयति भगवन्नैश्वरी रङ्गशायिन्!।
अप्रेर्योऽन्यैः स्वतन्त्रोऽप्रतिहति सदसत्कर्मचैत्र्या विचित्रं यत्रेच्छालेशतस्त्वं युगपदगणयन् विश्वमाविश्वकर्थ ॥

कार्येऽनन्ते स्वतनुमुखतस्त्वामुपादानमाहुः सा ते शक्तिस्सुकरमितरच्चेति वेलां विलङ्घ्य ।
इच्छा यावद्विहरति सदा रङ्गराजानपेक्षा सैवैशानादतिशयकरी सोर्णनाभौ विभाव्या ॥ ३१ ॥

स्वमहिमस्थितिरीश! भृशक्रियोऽप्यकलितश्रम एव बिभर्षि यत् ।
वपुरिव स्वमशेषमिदं बलं तव पराश्रितकारणवारणम् ॥ ३२ ॥

मृगनाभिगन्ध इव यत्सकलार्थान् निजसन्निधेरविकृतो विकृणोषि ।
प्रियरङ्ग! वीर्यमिति तत्तु वदन्ते सविकारकारणमितो विनिवार्यम् ॥ ३३ ॥

सहकार्यपेक्षममि हातुमिह तदनपेक्षकर्तृता । रङ्गधन! जयति तेज इति प्रणतार्तिजित् प्रतिभटाभिभावुकम् ॥ ३४ ॥

मर्त्योत्थायं विरिञ्चावधिकमुपरि चोत्प्रेक्ष्य मीमांसमाना रङ्गेन्द्रानन्दवल्ली तव गुणनिवहं यौवनानन्दपूर्वम् ।
न स्वार्थं स्प्रष्टुमीष्टे स्खलति पथि परं मूकलायं निलिल्ये हन्तैवं त्वद्गुणानामवधिगणनयोः का कथा चित्तवाचोः ॥

न्यधायिषत ये गुणा निधिनिधायमारण्यकेष्वमी म्रदिमचातुरीप्रणतचापलक्षान्तयः ।
दयाविजयसौन्दरीप्रभृतयोऽपि रत्नौघवत् जगद्व्यवहृतिक्षमा वरद! रङ्गरत्नापणे ॥ ३६ ॥

यमाश्रित्यैवात्मंभरय इव ते सद्गुणगणाः प्रथन्ते सोऽनन्तस्ववशघनशान्तोदितदशः ।
त्वमेव त्वां वेत्थ स्तिमितवितरङ्गं वरद! भोः! स्वसंवेद्यस्वात्मद्वयसबहुलानन्दभरितम् ॥ ३७ ॥

आघ्रायेश्वरगन्धमीशसदृशंमन्यास्तवेन्द्रादयो मुह्यन्ति त्वमनाविलो निरवधेर्भूम्नः कणेहत्य यत् ।
चित्रीयेमहि नात्र रङ्गरसिक! त्वं त्वन्महिम्नः परः वैपुल्यान्महितः स्वभाव इति वा किन्नाम साम्यं न ते ॥

षाड्गुण्याद्वासुदेवः पर इति स भवान् मुक्तभोग्यो बलाढ्यात् बोधात् सङ्कर्षणस्त्वं हरति वितनुषे शास्त्रमैश्वर्यवीर्यात् ।
प्रद्युम्नस्सर्गधर्मौ नयसि च भगवञ्छक्तितेजोऽनिरुद्धः बिभ्राणः पासि तत्त्वं गमयसि च तथा व्यूह्य रङ्गाधिराज! ॥

जाग्रत्स्वप्नाद्यलसतुरीयप्रायध्यातृक्रमवदुपास्यः। स्वामिंस्तत्तत्सहपरिबर्हः चातुर्व्यूह्यं वहसि चतुर्धा ॥ ४० ॥

अचिदविशेषितान् प्रलयसीमनि संसरतः करणकलेबरैर्घटयितुं दयमानमनाः ।
वरद! निजेच्छयैव परवानकरोः प्रकृतिं महदभिमानभूतकरणावलिकोरकिणीम् ॥ ४१ ॥

निम्नोन्नतं च करुणं च जगद्विचित्रं कर्म व्यपेक्ष्य सृजतस्तव रङ्गशेषिन् ।
वैषम्यनिर्घृणतयोर्न खलु प्रसक्तिः तद्ब्रह्मसूत्रसचिवाः श्रुतयो गृणन्ति ॥ ४२ ॥

स्वाधीने सहकारिकारणगणे कर्तुश्शरीरेऽथवा भोक्तुः स्वानुविधापराधविधयोः राज्ञो यथा शासितुः ।
दातुर्वाऽर्थिजने कटाक्षणमिव श्रीरङ्गसर्वस्व! ते स्रष्टुस्सृज्यदशाव्यपेक्षणमपि स्वातन्त्र्यमेवावहेत् ॥ ४३ ॥

प्रलयसमयसुप्तं स्वं शरीरैकदेशं वरद! चिदचिदाख्यं स्वेच्छया विस्तृणानः ।
खचितमिव कलापं चित्रमातत्य धून्वन् अनुशिखिनि शिखीव क्रीडसि श्रीसमक्षम् ॥ ४४ ॥

भूयो भूयस्त्वयि हितपरेऽप्युत्पथानात्मनीनस्रोतोमग्नानपि पथि नयंस्त्वं दुराशावशेन ।
रुग्णे तोके स्व इव जननी तत्कषायं पिबन्ती तत्तद्वर्णाश्रमविधिवशः क्लिश्यसे रङ्गराज! ॥ ४५ ॥

सार्व! त्वत्कं सकलचरितं रङ्गधामन्! दुराशापाशेभ्यस्स्यान्न यदि जगतां जातु मूर्खोत्तराणाम् ।
निस्तन्द्रालोस्तव नियमतो नर्तुलिङ्गप्रवाहा सर्गस्थेमप्रभृतिषु सदा जागरा जाग्रटीति ॥ ४६ ॥

सुहृदिव निगलाद्यैरुन्मदिष्णुं नृशंसं त्वमपि निरयपूर्वैर्दण्डयन् रङ्गनेतः! ।
तदितरमपि बाधात्त्रायसे भोगमोक्षप्रदिरपि तव दण्डापूपिकातस्सुहृत्त्वम् ॥ ४७ ॥

धृतिनियमनरक्षावीक्षणैश्शास्त्रदानप्रभृतिभिरचिकित्स्यान् प्राणिनः प्रेक्ष्य भूयः ।
सुरमनुजतिरश्चां लीलया तुल्यधर्मा त्वमवतरसि देवोऽजोऽपि सन्नव्ययात्मा ॥ ४८ ॥

अनुजनुरनुरूपरूपचेष्टा न यदि समागममिन्दिराऽकरिष्यत् । असरसमथवाऽप्रियम्भविष्णु ध्रुवमकरिष्यत रङ्गराजनर्म ॥

गरीयस्त्वं परिजानन्ति धीराः परं भावं मनुजत्वादिभूष्णुम् । अजानन्तस्त्ववजानन्ति मूढाः जनिघ्नं ते भगवञ्जन्म कर्म ॥

मध्येविरिञ्चिगिरिशं प्रथमावतारः तत्साम्यतः स्थगयितुं तव चेत् स्वरूपम् ।
किं ते परत्वपिशुनैरिह रङ्गधामन्! सत्त्वप्रवर्तनकृपापरिपालनाद्यैः ॥ ५१ ॥

मधुःकैटभश्चेति रोधं विधूय त्रयीदिव्यचक्षुर्विधातुर्विधाय । स्मरस्यङ्ग! रङ्गिंस्तुरङ्गावतारःसमस्तं जगज्जीवयिष्यस्यकस्मात् ॥

रङ्गधे! तिमिरवस्मरशीतस्वच्छहंसतनुरिन्दुरिवोद्यन् । वेदभाभिरनुजग्रहिथाऽऽर्तान् ज्ञानयज्ञसुधयैव समृद्धयन् ॥ ५३ ॥

वटदलमधिशय्य रङ्गधामन्! शयित इवार्णवतर्णकः पदाब्जम् ।
अधिमुखमुदरे जगन्ति मातुं निदधिथ वैष्णवभोग्यलिप्सया वा ॥ ५४ ॥

उन्मूल्याऽऽहर मन्दराद्रिमहिना तं सम्बधानाऽमुना दोर्भिश्चञ्चलमालिकैश्च दधिनिर्माथं मथानाम्बुधिम् ।
श्रीरङ्गेश्वर! चन्द्रकौस्तुभसुधापूर्वं गृहाणेति ते कुर्वाणस्य फलेग्रहिर्हि कमलालाभेन सर्वः श्रमः ॥ ५५ ॥

देवीहस्ताम्बुजेभ्यश्चरणकिसलये संवहद्भ्योऽपहृत्य प्रत्यस्यानन्तभोगं झटिति चलपुटे चक्षुषी विस्तृणानः ।
आश्लिष्योरश्च लक्ष्म्याः स्तनकलशकनत्कुङ्कुमस्तोमपङ्कादेवः श्रीरङ्गधामा गजपतिघुषिते व्याकुलः स्तात् पुरो नः ॥ ५६ ॥

अतन्त्रितचमूपतिप्रहितहस्तमस्वीकृतप्रणीतमणिपादुकं किमिति चाकुलान्तःपुरम् ।
अवाहनपरिष्क्रियं पतगराजमारोहतः करिप्रवरबृंहिते भगवतस्त्वरायै नमः ॥ ५७ ॥

यं पश्यन्विश्वधुर्या धियमसकृदथो मन्थरां मन्यमानः हुंकारास्फालनाङ्घ्रिप्रहतिभिरपि तं तार्क्ष्यमध्यक्षिपस्त्वम् ।
किञ्चोदञ्चन्नुदस्थास्तमथ गजपतेर्बृंहिते जृम्भमाणे देव! श्रीरङ्गबन्धो! प्रणमति हि जने कान्दिशीकी दशा ते॥ ५८॥

श्रीरङ्गेशय! शरणं ममासि वात्याव्यालोलत्कमलतटाकताण्डवेन ।
स्रग्भूषाम्बरमयथायथं दधानः धिङ्मामित्यनुगजगर्जमाजगन्थ ॥ ५९ ॥

मीनतनुस्त्वं नावि निधाय स्थिरचरपरिकरमनुमनु भगवन्!। वेदसनाभिरवोक्तिविनोदैरकलितलयभयलवममुमवहः॥६०॥

श्रीनयनाभोद्भासुरदीर्घप्रविपुलसुरुचिरशुचिशिशिरवपुः । पक्षनिगीर्णोद्गीर्णमहाब्धिस्थलजलविहरणरतगतिरचरः॥६१॥

चकर्थ श्रीरङ्गिन्निखिलजगदाधारकमठो भवन् धर्मान् कूर्मः पुनरमृतमन्थाचलधरः ।
जगन्थ श्रेयस्त्वं मरकतशिलापीठललितं जलादुद्यल्लक्ष्मीपदकिसलयन्याससुलभम् ॥ ६२ ॥

हृदि सुररिपोर्दंष्ट्रोत्खाते क्षिपन् प्रलयार्णवं क्षितिकुचतटीमर्चन् दैत्यास्रकुङ्कुमचर्चया ।
स्फुटधुतसटाभ्राम्यद्ब्रह्मस्तवोन्मुखबृंहितः शरणमसि मे रङ्गिंस्त्वं मूलकोलतनुर्भवन् ॥ ६३ ॥

नृहरिदशयोः पश्यन्नौत्पत्तिकं घटनाद्भुतं नरमुत हरिं दृष्ट्वैकैकं समुद्विजते जनः ।
इति किल सिताक्षीरन्यायेन सङ्गमिताङ्गकं स्फुटसटमहादंष्ट्रं रङ्गेन्द्रसिंहमुपास्महे ॥ ६४ ॥

द्विषाणद्वेषोद्यन्नयनवनवह्निप्रशमनभ्रमल्लक्ष्मीवक्त्रप्रहितमधुगण्डूषसुषमैः ।
नखक्षुण्णारातिक्षतजपटलैराप्लुतसटाच्छटास्कन्धो रुन्धे दुरितमिह पुंस्पञ्चवदनः ॥ ६५ ॥

नखाग्रग्रस्तेऽपि द्विषति निजभक्तद्रुहि रुषः प्रकर्षाद्विष्णुत्वद्विगुणपरिणाहोत्कटतनुः ।
विरुद्धे वैयग्रीसुघटितसमानाधिकरणे नृसिंहत्वे विश्वद्वरद! विभरामासिथ जगत् ॥ ६६ ॥

दैत्यौदार्येन्द्रयाच्ञाविहतिमपनयन् वामनोऽर्थी त्वमासीः विक्रान्ते पादपद्मे त्रिजगदणुसमं पांसुलीकृत्य लिल्ये ।
नाभीपद्मश्च मानक्षममिव भुवनग्राममन्यं सिसृक्षुः तस्थौ रङ्गेन्द्र! वृत्ते तव जयमुखरो डिण्डिमस्तत्र वेदः ॥ ६७ ॥

भवान् रामो भूत्वा परशुपरिकर्मा भृगुकुलादलावीद्भूपालान् पितृगणमताप्सीत्तदसृजा ।
भुवो भाराक्रान्तं लघु तलमुपाचीक्लृपदिति द्विषामुग्रंपश्योऽप्यनघ! मम मा जीगणदघम् ॥ ६८ ॥

मनुजसमयं कृत्वा नाथावतेरिथ पद्मया क्वचन विपिने सा चेदन्तर्धि नर्म विनिर्ममे ।
किमथ जलधिं बध्वा रक्षो विधीशवरोद्धतं बलिमुखकुलोच्छिष्टं कुर्वन् रिपुं निरपत्रयः ॥ ६९ ॥

यद्द्यूते विजयापदानगणना कालिङ्गदन्ताङ्कुरैः यद्विश्लेषलवोऽपि कालियभुवे कोलाहलायाभवत् ।
दूत्येनापि च यस्य गोपवनिताः कृष्णागसां व्यस्मरन् तं त्वां क्षेमकृषीवलं हलधरं रङ्गेश! भक्तास्महे ॥

आकण्ठवारिभरमन्थरमेघदेश्यं पीताम्बरं कमललोचनपञ्चहेति ।
ब्रह्म स्तनंधयमयाचत देवकी त्वां श्रीरङ्गकान्त! सुतकाम्यति काऽपरैवम् ॥ ७१ ॥

शैलोऽग्निश्च जलांबभूव मुनयो मूढांबभूवुर्जडाः प्राज्ञामासुरगास्सगोपममृतामासुर्महाशीविषाः ।
गोव्याघ्रास्सहजांबभूवुरपरे त्वन्यांबभूवुः प्रभो! त्वं तेष्वन्यतमांबभूविथ भवद्वेणुक्वणोन्मादने ॥ ७२ ॥

कल्कितनुर्धरणीं लघयिष्यन् कलिकलुषान् विलुनासि पुरा त्वम् ।
रङ्गनिकेत! लुनीहि लुनीहीत्यखिलमरुन्तुदमद्य लुनीहि ॥ ७३ ॥

आस्तां ते गुणराशिवद्गुणपरीवाहात्मनां जन्मनां संख्या भौमनिकेतनेष्वपि कुटीकुञ्जेषु रङ्गेश्वर! ।
अर्च्यस्सर्वसहिष्णुरर्चकपराधीनाखिलात्मस्थितिः प्रीणीषे हृदयालुभिस्तव ततश्शीलाज्जडीभूयते ॥ ७४ ॥

श्रीमद्व्योम नसीम वाङ्मनसयोस्सर्वेऽवताराः क्वचित् काले विश्वजनीनमेतदितिधीः श्रीरङ्गधामन्यथ ।
आर्तस्वागतिकैः कृपाकलुषितैरालोकितैरार्द्रयन् विश्वत्राणविमर्शनस्खलितया निद्रासि जागर्यया ॥ ७५ ॥

सर्गाभ्यासविशालया निजधिया जानन्ननन्तेशयं भारत्या सहधर्मचाररतया स्वाधीनसङ्कीर्तनः ।
कल्पानेव बहून् कमण्डलुगलद्गङ्गाप्लुतोऽपूजयद्ब्रह्मा त्वां मुखलोचनाञ्जलिपुटैः पद्मैरिवाऽऽवर्जितैः ॥ ७६ ॥

मनुकुलमहीपालव्यानम्रमौलिपरम्परामणिमकरिकारोचिर्नीराजिताङ्घ्रिसरोरुहः ।
स्वयमथ विभो! स्वेन श्रीरङ्गधामनि मैथिलीरमणवपुषा स्वार्हाण्याराधनान्यसि लम्भितः ॥ ७७ ॥

मन्वन्ववाये द्रुहिणे च धन्ये विभीषणेनैव पुरस्कृतेन । गुणैर्दरिद्राणमिमं जनं त्वं मध्येसरिन्नाथ! सुखाकरोषि॥

तेजः परं तत्सवितुर्वरेण्यं धाम्ना परेणाप्रणखात्सुवर्णम् । त्वां पुण्डरीकेक्षणमामनन्ति श्रीरङ्गनाथं तमुपासिषीय ॥

आत्माऽस्य गन्तुः परितस्थुषश्च मित्रस्य चक्षुर्वरुणस्य चाग्नेः । लक्ष्म्या सहौत्पत्तिकगाढबन्धं पश्येम रङ्गे शरदश्शतं त्वाम्॥

यस्यास्मि पत्युर्न तमन्तरेमि श्रीरङ्गतुङ्गायतने शयानम् । स्वभावदास्येन च योऽहमस्मि स सन् यजे ज्ञानमयैर्मखैस्त्वम् ॥

आयुः प्रजानाममृतं सुराणां रङ्गेश्वरं त्वां शरणं प्रपद्ये । मां ब्रह्मणेऽस्मै महसे तदर्थं प्रत्यञ्चमेनं युनजै परस्मै ॥

आर्तिं तितीर्षुरथ रङ्गपते! धनायन् आत्मम्भरिर्विविदिषुर्निजदास्यकाम्यन् ।
ज्ञानीत्यमून् सममथास्सममत्युदारान् गीतासु देव! भवदाश्रयणोपकारान् ॥ ८३ ॥

नित्यं काम्यं परमपि कतिचित्त्वय्यध्यात्मस्वमतिभिरममाः । न्यस्यासङ्गा विदधति विहितं श्रीरङ्गेन्दो! विदधति न च ते॥

प्रत्यञ्चं स्वं पञ्चविंशं पराचस्सञ्चक्षाणास्तत्त्वराशेर्विविच्य ।
युञ्जानाश्चर्तम्भरायां स्वबुद्धौ स्वं वा त्वां वा रङ्गनाथाऽऽनुवन्ति ॥ ८५ ॥

अथ मृदितकषायाः केचिदाजानदास्यत्वरितशिथिलचित्ताः कीर्तिचिन्तानमस्याः ।
विदधति ननु पारं भक्तिनिघ्ना लभन्ते त्वयि किल ततमे त्वं तेषु रङ्गेन्द्र! किं तत् ॥ ८६ ॥

उपादत्ते सत्तास्थितिनियमनाद्यैश्चिदचितौ स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी ।
उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ अतस्त्वां श्रीरङ्गेशय! शरणमव्याजमभजम् ॥ ८७ ॥

पट्टैनैकवराटिकेव कृता स्थलयोः काकणिकासुवर्णकोटयोः । भवमोक्षणयोस्त्वयैव जन्तुः क्रियते रङ्गनिधे! त्वमेव पाहि॥

ज्ञानक्रियाभजनसम्पदकिञ्चनोऽहमिच्छाधिकारशकनानुशयानभिज्ञः ।
रङ्गेश! पूर्णवृजिनश्शरणं भवेति मौर्ख्याद्ब्रवीमि मनसा विषयाकुलेन ॥ ८९ ॥

त्वयि सति पुरुषार्थे मत्परे चाहमात्मक्षयकरकुहनार्थाञ्छ्रद्दधद्रङ्गचन्द्र ! ।
जनमखिलमहंयुर्वञ्चयामि त्वदात्मप्रतिमभवदनन्यज्ञानिवद्देशिकस्सन् ॥ ९० ॥

अतिक्रामन्नाज्ञां तव विधिनिषेधेषु भवतेऽपि अभिद्रुह्यन्वाग्धीकृतिभिरपि भक्ताय सततम् ।
अजानन् जानन् वा भवदसहनीयागसि रतस्सहिष्णुत्वाद्रङ्गप्रवण ! तव माभूवमपरः ॥ ९१ ॥

प्रकुपितभुजगफणानामिव विषयाणामहं छायाम् । सति तव भुजसुरविटपिप्रच्छाये रङ्गजीवित ! भजामि ॥ ९२ ॥

त्वत्सर्वशक्तेरधिकाऽस्मदादेःकीटस्य शक्तिर्बत रङ्गबन्धो ! । यत्त्वत्कृपामप्यति कोशकारन्यायादसौ नश्यति जीवनाशम् ॥

श्रीरङ्गेश ! त्वद्गुणानामिवास्मद्दोषाणां कः पारदृश्वा यतोऽहम् ।
ओघे मोघोदन्यवत् त्वद्गुणानां तृष्णापूरं वर्षतां नास्मि पात्रम् ॥ ९४ ॥

त्वं चेन्मनुष्यादिषु जायमानस्तत्कर्मपाकं कृपयोपभुंक्षे। श्रीरङ्गशायिन् ! कुशलेतराभ्यां भूयोऽभिभूयेमहि कस्य हेतोः ॥

क्षमा सापराधेऽनुतापिन्युपेया कथं सापराधेऽपि दृप्ते मयि स्यात् ।
तथाऽप्यत्र रङ्गाधिनाथानुतापव्यपायं क्षमेतातिवेला क्षमा ते ॥ ९६ ॥

बलिभुजि शिशुपाले तादृगागस्करे वा गुणइवसहवासात्त्वत्क्षमा संकुचन्ती ।
मयि गुणपरमाणूदन्तचिन्तानभिज्ञे विहरतु वरदासौ सर्वदा सार्वभौमी ॥ ९७ ॥

दया परव्यसनहरा भवत्यथा सुखायते मम तदहं दयातिगः ।
तथाऽप्यसौ सुखयति दुःखमित्यतः दयस्व मां गुणमय ! रङ्गमन्दिर ! ॥ ९८ ॥

गर्भजन्मजरामृतिक्लेशकर्मपट्टूर्मिगः । श्वेव देववषट्कृतं त्वां श्रियोऽर्हमकामये ॥ ९९ ॥

अनुकृत्य पूर्वपुंसः रङ्गनिधे ! विनयडम्भतोऽमुष्मात् । शुन इव मम वत्मूर्द्रेः उपभोगस्त्वद्वितीर्णायाः ॥ १०० ॥

सकृत्प्रपन्नाय तवाहमस्मीति आयाचते चाभयमीक्षमाणः । त्वामप्यपास्याहमहम्भवामि रङ्गेश ! विस्रम्भविवेकरेकात् ॥

तव भरोऽहमकारिषि धार्मिकैश्शरणमित्यपि वाचमुदैरिरम् । इति ससाक्षिकयन्निदमद्य मां कुरु भरं तव रङ्गधुरंधर ! ॥

दयाऽन्योषां दुःखाप्रसहनमनन्योऽसि सकलैः दयालुस्त्वं नातः प्रणमदपराधानविदुषः ।
क्षमा ते रङ्गेन्दो ! भवति न तरां नाथ ! न तमां तवौदार्यं यस्मात्तव विमत्वमर्शिस्त्वममथाः ॥१०३॥

गुणतुङ्गतया तव रङ्गपते ! भृशनिम्नमिमं जनमुन्नमय । यदपेक्ष्यमपेक्षितुरस्य हि तत्परिपूरणमीशितुरीश्वरता ॥१०४॥

त्वं मीनपानीयनयेन कर्म धीभक्तिवैराग्यजुषो बिभर्षि। रङ्गेश ! मां पासि मितम्पचं यत्पानीयशालं मरुभूषु तत्स्यात् ॥

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः । श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

॥ श्रीरङ्गराजस्तवे उत्तरशतकं समाप्तम् ॥

॥ श्रीरङ्गराजस्तवश्च समाप्तः ॥



श्रीपराशरभट्टार्यैरनुगृहीतः

# ॥ श्रीगुणरत्नकोशः ॥

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः । श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

श्रियै समस्तचिदचिद्विधानव्यसनं हरेः । अङ्गीकारिभिरालोकैः सार्थयन्त्यै कृतोऽञ्जलिः ॥ १ ॥

उल्लासपल्लवितपालितसप्तलोकीनिर्वाहकोरकितनेमकटाक्षलीलाम् ।
श्रीरङ्गहर्म्यतलमङ्गलदीपरेखां श्रीरङ्गराजमहिषीं श्रियमाश्रयामः ॥ २ ॥

अनुकलतनुकाण्डालिङ्गनारम्भशुम्भत्प्रतिदिशभुजशाखश्रीसखानोकहर्द्धिः ।
स्तननयनगुलुच्छस्फारपुष्पद्विरेफा रचयतु मयि लक्ष्मीकल्पवल्ली कटाक्षान् ॥ ३ ॥

यद्भ्रूभङ्गाः प्रमाणं स्थिरचररचनातारतम्ये मुरारेः वेदान्तास्तत्त्वचिन्तां मुरभिदुरसि यत्पादचिह्नैस्तरन्ति ।
भोगोपोद्घातकेलीचुलकितभगवद्वैश्वरूप्यानुभावा सा नः श्रीरास्तृणीताममृतलहरिधीलङ्घनीयैरपाङ्गैः ॥ ४ ॥

यद्यावत्तव वैभवं तदुचितस्तोत्राय दूरे स्पृहा स्तोतुं के वयमित्यदश्च जगृहुः प्राञ्चो विरिञ्चादयः ।
अप्येवं तव देवि ! वाङ्मनसयोर्भाषानभिज्ञं पदं कावाचः प्रयतामहे कवयितुं स्वस्ति प्रशस्त्यै गिराम् ॥ ५ ॥

स्तोतारं तमुशन्ति देवि ! कवयो यो विस्तृणीते गुणान् स्तोतव्यस्य ततश्च ते स्तुतिधुरा मय्येव विश्राम्यति ।
यस्मादस्मदमर्षणीयफणितिस्वीकारतस्ते गुणाः क्षान्त्यौदार्यदयादयो भगवति ! स्वां प्रस्तुवीरन् प्रथाम् ॥ ६ ॥

सूक्तिं समग्रयतु नः स्वयमेव लक्ष्मीः श्रीरङ्गराजमहिषी मधुरैः कटाक्षैः ।
वैदग्ध्यवर्णगुणगुम्भनगौरवैर्यां कण्डूलकर्णकुहराः कवयो धयन्ति ॥ ७ ॥

अनाघ्रातावद्यं बहुगुणपरीणाहि मनसो दुहानं सौहार्दं परिचितमिवाथापि गहनम् ।
पदानां सौभ्रात्रादनिमिषनिषेव्यं श्रवणयोः त्वमेव श्रीर्मह्यं बहुमुखय वाणीविलसितम् ॥ ८ ॥

श्रियः श्रीः ! श्रीरङ्गेशय ! तव च हृद्यां भगवतीं श्रियं त्वत्तोऽप्युच्चैर्वयमिह फणामः शृणुतराम् ।
दृशौ ते भूयास्तां सुखतरलतारे श्रवणतः पुनर्हर्षोत्कर्षात् स्फुटतु भुजयोः कञ्चुकशतम् ॥ ९ ॥

देवि ! श्रुतिं भगवतीं प्रथमे पुमांसः त्वत्सद्गुणौघमणिकोशगृहं गृणन्ति ।
तद्द्वारपाटनपटूनि च सेतिहाससन्तर्कणस्मृतिपुराणपुरस्सराणि ॥ १० ॥

आहुर्वेदा नमानं कतिचन कतिचाराजकं विश्वमेतद्राजन्वत्केचिदीशं गुणिनमपि गुणैस्तं दरिद्राणमन्ये ।
भिक्षावन्ये सुराजम्भवमिति च जडास्ते तलातल्यकार्षुः ये ते श्रीरङ्गहर्म्याङ्गणकनकलते ! न क्षणं लक्ष्यमासन् ॥

मनसि विलसताऽक्ष्णा भक्तिसिद्धाञ्जनेन श्रुतिशिरसि निगूढं लक्ष्मि ! ते वीक्षमाणाः ।
निधिमिव महिमानं भुञ्जते येऽपि धन्याः ननु भगवति ! दैवीं सम्पदं तेऽभिजाताः ॥ १२ ॥

अस्येशाना जगत इति तेऽधीमहे यां समृद्धिं श्रीः! श्रीसूक्तं बहुमुखयते तां च शाखानुशाखम् ।
ईष्टे कश्चिज्जगत इति यः पौरुषे सूक्त उक्तः तं च त्वत्कं पतिमधिजगावुत्तरश्चानुवाकः ॥ १३ ॥

उद्बाहुस्त्वामुपनिषदसावाह नैका नियन्त्रीं श्रीमद्रामायणमपि परं प्राणिति त्वच्चरित्रैः ।
स्मर्तारोऽस्मज्जननि! यतमे सेतिहासैः पुराणैः निन्युर्वेदानपि च ततमे त्वन्महिम्नि प्रमाणम् ॥ १४ ॥

आकुम्रामनियामकादपि विभोरासर्वनिर्वाहकादैश्वर्यं यदिहोत्तरोत्तरगुणं श्रीरङ्गभर्तुः प्रिये! ।
तुङ्गं मङ्गलमुज्ज्वलं गरिमवत्पुण्यं पुनः पावनं धन्यं यत्तददश्च वीक्षणभुवस्ते पक्ष्मषा विप्रुषः ॥ १५ ॥

एको मुक्तातपत्रप्रचलमणिघणात्कारिमौलिर्मनुष्यः दृप्यद्दन्तावलस्थो न गणयति नतान् यत्क्षणं क्षोणिपालान् ।
यत्तस्मै तिष्ठतेऽन्यः कृपणमशरणो दर्शयन्दन्तपङ्क्ती तत्ते श्रीरङ्गराजप्रणयिनि! नयनोदञ्चितन्यञ्चिताभ्याम् ॥ १६ ॥

रतिर्मतिसरस्वतीधृतिसमृद्धिसिद्धिश्रियः सुधासखि! यतोमुखं विचलिषेत्तव भ्रूलता ।
ततोमुखमथेन्दिरे! बहुमुखीमहंपूर्विकां विगाह्य च वशंवदाः परिवहन्ति कूलङ्कषाः ॥ १७ ॥

सहस्थिरपरित्रसत्रजविरिञ्चनाकिञ्चनैः अनोकहबृहस्पतिप्रबलविक्लबप्रक्रियम् ।
इदं सदसदात्मना निखिलमेव निम्नोन्नतं कटाक्षतदुपेक्षयोस्तव हि लक्ष्मि! तत्ताण्डवम् ॥ १८ ॥

काले शंसति योग्यतां चिदचितोरन्योन्यमालिङ्गतोः भूताहंकृतिबुद्धिपञ्चकरणीस्वान्तप्रवृत्तीन्द्रियैः ।
अण्डानावरणैस्सहस्रमकरोत्तान् भूर्भुवःस्वर्वतः श्रीरङ्गेश्वरदेवि! ते विहृतये सङ्कल्पमानः प्रियः ॥ १९ ॥

शब्दादीन् विषयान् प्रदर्श्य विभवं विस्मार्य दास्यात्मकं वैष्णव्या गुणमायया ऽऽत्मनिवहान् विप्लाव्य पूर्वः पुमान् ।
पुंसा पण्यवधूविडम्बिवपुषा धूर्तानिवायासयन् श्रीरङ्गेश्वरि! कल्पते तव परीहासात्मने केलये ॥ २० ॥

यद्दूरे मनसो यदेव तमसः पारे यदत्यद्भुतं यत्कालादपचेलिमं सुरपुरी यद्गच्छतो दुर्गतिः ।
सायुज्यस्य यदेव सूतिरथवा यद्दुर्ग्रहं मन्दिरां तद्विष्णोः परमं पदं तव कृते मातस्समाम्नासिषुः ॥ २१ ॥

हेलायामखिलं चराचरमिदं भोगे विभूतिः परा पुण्यास्ते परिचारकर्मणि सदा पश्यन्ति ये सूरयः ।
श्रीरङ्गेश्वरदेवि! केवलकृपानिर्वाह्यवर्गे वयं शेषित्वे परमः पुमान् परिकरा ह्येते तव स्फारणे ॥ २२ ॥

आज्ञानुग्रहभीमकोमलपुरीपाला फलं भेजुषां याऽयोध्येत्यपराजितेति विदिता नाकं परेण स्थिता ।
भावैरद्भुतभोगभूमगहनैस्सान्द्रा सुधास्यन्दिभिः श्रीरङ्गेश्वरगेहलक्ष्मि! युवयोस्तां राजधानीं विदुः ॥ २३ ॥

तस्यां च त्वत्कृपावन्निरवधिजनताविश्रमार्हावकाशं सङ्कीर्णं दास्यतृष्णाकलितपरिकरैः पुंभिरानन्दनिघ्नैः ।
स्नेहादस्थानरक्षाव्यसनिभिरभयं शार्ङ्गचक्रासिमुख्यैः आनन्दैकार्णवं श्रीभगवति! युवयोराहुरास्थानरत्नम् ॥ २४ ॥

तत्र स्रक्स्पर्शगन्धं स्फुरदुपरिफणारत्नरोचिर्वितानं विस्तीर्यानन्तभोगं तदुपरि नयता विश्वमेकातपत्रम् ।
तैस्तैः कान्तेन शान्तोदितगुणविभवैरर्हता त्वामसंख्यैः अन्योन्याद्वैतनिष्ठाघनरसगहनान् देवि! बध्नासि भोगान् ॥

भोग्या वामपि नान्तरीयकतया पुष्पाङ्गरागैस्समं निर्वृत्तप्रणयातिवाहनविधौ नीताः परीवाहताम् ।
देवि! त्वामनु नीलया सह मही देव्यस्सहस्रं तथा याभिस्त्वं स्तनबाहुदृष्टिभिरिव स्वाभिः प्रियं श्लाघसे ॥ २६ ॥

ते साध्यास्सन्ति देवा जननि! गुणवपुर्वेषवृत्तस्वरूपैः भोगैर्वा निर्विशेषास्सवयस इव ये नित्यनिर्दोषगन्धाः।
हे श्रीः! श्रीरङ्गभर्तुस्तव च पदपरीचारवृत्त्यै सदाऽपि प्रेमप्रद्राणभावाविलहृदयहठात्कारकैङ्कर्यभोगाः ॥ २७ ॥

स्वरूपं स्वातन्त्र्यं भगवत इदं चन्द्रवदने! त्वदाश्लेषोत्कर्षाद्भवति खलु निष्कर्षसमये।
त्वमासीर्मातः! श्रीः! कमितुरिदमित्थंत्वविभवस्तदन्तर्भावात्त्वां न पृथगभिधत्ते श्रुतिरपि ॥ २८ ॥

तव स्पर्शादीशं स्पृशति कमले! मङ्गलपदं तवेदं नोपाधेरुपनिपतितं श्रीरसि यतः।
प्रसूनं पुष्यन्तीमपि परिमलर्द्धिं जिगदिषुः न चैवंत्वादेवं स्वदत इति कश्चित्कथयते ॥ २९ ॥

अपाङ्गा भूयांसो यदुपरि परं ब्रह्म तदभूदमी यत्र द्वित्रास्स च शतमखादिस्तदधरात्।
अतः श्रीराम्नायस्तदुभयमुशंस्त्वां प्रणिजगौ प्रशस्तिस्सा राज्ञो यदपि च पुरीकोशकथनम् ॥ ३० ॥

स्वतः श्रीस्त्वं विष्णोः स्वमसि तत एवैष भगवान् त्वदायत्तर्द्धित्वेऽप्यभवदपराधीनविभवः।
स्वया दीप्तया रत्नं भवदपि महार्घं न विगुणं न कुण्ठस्वातन्त्र्यं भवति च न चान्याहितगुणम् ॥ ३१ ॥

प्रशकनबलज्योतिर्ज्ञानैश्वरीविजयप्रथाप्रणतवरणप्रेमक्षेमङ्करत्वपुरस्सराः।
अपि परिमलः कान्तिर्लावण्यमर्चिरितीन्दिरे! तव भगवतश्चैते साधारणा गुणराशयः ॥ ३२ ॥

अन्येऽपि यौवनमुखा युवयोस्समानाः श्रीरङ्गमङ्गलविजृम्भणवैजयन्ति!।
तस्मिंस्तव त्वयि च तस्य परस्परेण संस्तीर्य दर्पण इव प्रचुरं स्वदन्ते ॥ ३३ ॥

युवत्वादौ तुल्येऽप्यपरवशताशत्रुशमनस्थिरत्वादीन्कृत्वा भगवति गुणान् पुंस्त्वसुलभान्।
त्वयि स्त्रीत्वैकान्तान् म्रदिमपतिपारार्थ्यकरुणाक्षमादीन्वा भोक्तुं भवति युवयोरात्मनि भिदा ॥ ३४ ॥

घनकनकद्युती युवदशामपि मुग्धदशां युवतरुणत्वयोरुचितमाभरणादि परम्।
ध्रुवमसमानदेशविनिवेशि विभज्य हरौ त्वयि च कुशेशयोदरविहारिणि! निर्विशसि ॥ ३५ ॥

अङ्गं ते मृदुशीतमुग्धमधुरोदारैर्गुणैर्गुम्भतः क्षीराब्धेः किमृजीषतामुपगता मन्ये महार्घास्ततः।
इन्दुः कल्पलतासुधामधुमुखा इत्याविलां वर्णनां श्रीरङ्गेश्वरि! शान्तकृत्रिमकथं दिव्यं वपुर्नार्हति ॥ ३६ ॥

प्रणमदनुविधित्सावासनानम्रमग्रे प्रणयिपरिचिचीषाकुञ्चितं पार्श्वकेन।
कनकनिकषचञ्चच्चम्पकस्रक्समानप्रवरमिदमुदारं वर्ष्म वाचामभूमिः ॥ ३७ ॥

एकं न्यञ्चय नतिक्षमं मम परं चाकुञ्चय पादाम्बुजं मध्येविष्टरपुण्डरीकमभयं विन्यस्य हस्ताम्बुजम्।
त्वां पश्येम निषेदुषीं प्रतिकलं कारुण्यकूलङ्कषस्फारापाङ्गतरङ्गमम्ब! मधुरं मुग्धं मुखं बिभ्रतीम् ॥ ३८ ॥

सुरभितनिगमान्तं वन्दिषीयेन्दिरायाः तव कमलपलाशप्रक्रियं पादयुग्मम्।
वहति यदुपमर्दैर्वैजयन्ती हिमाम्भःप्लुतिभिरिव नवत्वं कान्तबाहान्तराले ॥ ३९ ॥

त्वत्स्वीकारकलावलेपकलुषा राज्ञां दृशो दुर्वचाः नित्यं त्वन्मधुपानमत्तमधुपश्रीनिर्भराभ्यां पतिम्।
दृग्भ्यामेव हि पुण्डरीकनयनं वेदो विदामास ते साक्षाल्लक्ष्मि! तवावलोकविभवः काका कया वर्ण्यते ॥ ४० ॥

आनन्दात्मभिरीशमज्जनमदक्षीबालसैरागलप्रेमार्द्रैरपि कूलमुद्वहकृपासंप्लाविताऽस्मादृशैः ।
पद्मे! ते प्रतिबिन्दुबद्धकलिकब्रह्मादिविष्कम्भकैः ऐश्वर्योद्गमगद्गदैरशरणं मां पालयालोकितैः ॥ ४१ ॥

पादारुन्तुदमेव पङ्कजरजश्चेटीभृशालोकितैः अङ्गम्लानिरथाम्ब! साहसविधौ लीलारविन्दग्रहः ।
डोला ते वनमालया हरिभुजे हा कष्टशब्दास्पदं केन श्रीरतिकोमला तनुरियं वाचां विमर्दक्षमा ॥ ४२ ॥

आमर्यादमकण्टकं स्तनयुगं नाद्यापि नालोकितभ्रूभेदस्मितविभ्रमा जहति वा नैसर्गिकत्वायशः ।
सूते शैशवयौवनव्यतिकरो गात्रेषु ते सौरभं भोगस्रोतसि कान्तदेशिककरग्राहेण गाहक्षमः ॥ ४३ ॥

आमोदाद्भुतशालि यौवनदशाव्याकोचमम्लानिमत्सौन्दर्यामृतसेकशीतलमिदं लावण्यसूत्रार्पितम् ।
श्रीरङ्गेश्वरि! कोमलाङ्गसुमनस्सन्दर्भणं देवि! ते कान्तोरःप्रतियत्नमर्हति कविं धिङ्मामकाण्डाकुलम् ॥ ४४ ॥

मर्मस्पृशो रससिरा व्यतिविध्य वृत्तैः कान्तोपभोगललितैर्लुलिताङ्गयष्टिः ।
पुष्पावलीव रसिकभ्रमरोपभुक्ता त्वं देवि! नित्यमभिनन्दयसे मुकुन्दम् ॥ ४५ ॥

कनकरशनामुक्ताताटङ्कहारललाटिकामणिसरतुलाकोटिप्रायैर्जनार्दनजीविके! ।
प्रकृतिमधुरं गात्रं जागर्ति मुग्धविभूषणैर्वलयशकलैर्दुग्धं पुष्पैश्च कल्पलता यथा ॥ ४६ ॥

सामान्यभोग्यमपि कौस्तुभवैजयन्तीपञ्चायुधादि रमणः स्वयमेव बिभ्रत् ।
तद्भारखेदमिव ते परिहर्तुकामः श्रीरङ्गधाममणिमञ्जरि! गाहते त्वाम् ॥ ४७ ॥

यदि मनुजतिरश्चां लीलया तुल्यवृत्तेः अनुजनुरनुरूपा देवि! नावातरिष्यः ।
असरसमभविष्यन्नर्म नाथस्य मातः! दरदलदरविन्दोदन्तकान्तायताक्षि ॥ ४८ ॥

स्खलितकटकमाल्यैर्दोर्भिरब्धिं मुरारेः भगवति! दधिमाथं मथ्नतः श्रान्तिशान्त्यै ।
अमदमृततरङ्गावर्ततः प्रादुरासीः स्मितनयनसुधाभिस्सिञ्चती चन्द्रिकेव ॥ ४९ ॥

मातर्मैथिलि! राक्षसीस्त्वयि तदैवार्द्रापराधास्त्वया रक्षन्त्या पवनात्मजाल्लघुतरा रामस्य गोष्ठी कृता ।
काकं तं च विभीषणं शरणमित्युक्तिक्षमौ रक्षतः सा नस्सान्द्रमहागसस्सुखयतु क्षान्तिस्तवाकस्मिकी ॥ ५० ॥

मातर्लक्ष्मि! यथैव मैथिलजनस्तेनाध्वना ते वयं त्वद्दास्यैकरसाभिमानसुभगैः भावैरिहामुत्र च ।
जामाता दयितस्तवेति भवतीसम्बन्धदृष्ट्या हरिं पश्येम प्रतियाम याम च परीचारान् प्रहृष्येम च ॥ ५१ ॥

पितेव त्वत्प्रेयान् जननि! परिपूर्णागसि जने हित(:)स्रोतोवृत्त्या भवति च कदाचित् कलुषधीः ।
किमेतन्निर्दोषः क इह जगतीति त्वमुचितैः उपायैर्विस्मार्य स्वजनयसि माता तदसि नः ॥ ५२ ॥

नेतुर्नित्यसहायिनी जननि! नस्त्रातुं त्वमत्रागता लोके त्वन्महिमावबोधबधिरे प्राप्ता विमर्दं बहु ।
क्लिष्टं ग्रावसु मालतीमृदुपदं विश्लिष्य वासो वने जातो धिक् करुणां धिगस्तु युवयोः स्वातन्त्र्यमत्यङ्कुशम् ॥

अधिशयितवानब्धिं नाथो ममन्थ बबन्ध तं हरधनुरसौ वल्लीभञ्जं बभञ्ज च मैथिलि ।
अपि दशमुखीं लूत्वा रक्षःकबन्धमनर्तयत् किमिव न पतिः कर्ता त्वच्चाटुचुञ्चुमनोरथः ॥ ५४ ॥

दशशतपाणिपादवदनाक्षिमुखैरखिलैः अपि निजवैश्वरूप्यविभवैरनुरूपगुणैः ।
अवतरणैरतैश्च रसयन् कमिता कमले! क्वचन हि विभ्रमभ्रमिमुखे विनिमज्जति ते ॥ ५५ ॥

जननभवनप्रीत्या दुग्धार्णवं बहुमन्यसे जननि! दयितप्रेम्णा पुष्णासि तत् परमं पदम् ।
उदधिपरमव्योम्नोर्विस्मृत्य मादृशरक्षणक्षममिति धिया भूयः श्रीरङ्गधामनि मोदसे ॥ ५६ ॥

औदार्यकारुणिकताश्रितवत्सलत्वपूर्वेषु सर्वमतिशायितमत्र मातः! ।
श्रीरङ्गधाम्नि यदुतान्यदुदाहरन्ति सीतावतारमुखमेतदमुष्य योग्या ॥ ५७ ॥

ऐश्वर्यमक्षरगतिं परमं पदं वा कस्मैचिदञ्जलिभरं वहते वितीर्य ।
अस्मै न किञ्चिदुचितं कृतमित्यथाम्ब! त्वं लज्जसे कथय कोऽयमुदारभावः ॥ ५८ ॥

ज्ञानक्रियाभजनसम्पदकिञ्चनोऽहम् इच्छाधिकारशकनानुशयानभिज्ञः ।
आगांसि देवि! युवयोरपि दुस्सहानि बध्नामि मूर्खचरितस्तव दुर्भरोऽस्मि ॥ ५९ ॥

इत्युक्तिकैतवशतेन विडम्बयामि तानम्ब! सत्यवचसः पुरुषान् पुराणान् ।
यद्वा न मे भुजबलं तव पादपद्मलाभे त्वमेव शरणं विधितः कृताऽसि ॥ ६० ॥

श्रीरङ्गे शरदश्शतं सह सुहृद्वर्गेण निष्कण्टकं निर्दुःखं सुसुखं च दास्यरसिकां भुक्त्वा समृद्धिं पराम् ।
युष्मत्पादसरोरुहान्तररजः स्याम त्वमम्बा पिता सर्वं धर्ममपि त्वमेव भव नः स्वीकुर्वकस्मात्कृपाम् ॥ ६१ ॥

॥ इति श्रीगुणरत्नकोशः समाप्तः ॥

---

श्रीपराशरभट्टार्यैरनुगृहीता

## ॥ अष्टश्लोकी ॥

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः । श्रीवत्साङ्कसुतश्श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

---

अकारार्थो विष्णुर्जगदुदयरक्षाप्रलयकृत् मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम् ।
उकारोऽनन्यार्हं नियमयति संबन्धमनयोः त्रयीसारस्त्र्यात्मा प्रणव इममर्थं समदिशत् ॥ १ ॥

मन्त्रब्रह्मणि मध्यमेन नमसा पुंसः स्वरूपं गतिः गम्यं शिक्षितमीक्षितेन पुरतः पश्चादपि स्थानतः ।
स्वातन्त्र्यं निजरक्षणं समुचिता वृत्तिश्च नान्योचिता तस्यैवेति हरेर्विविच्य कथितं स्वस्यापि नार्हं ततः ॥ २ ॥

अकारार्थायैव स्वमहमथ मह्यं न निवहाः नराणां नित्यानामयनमिति नारायणपदम् ।
यमाहास्मै कालं सकलमपि सर्वत्र सकलास्ववस्थास्वाविःस्युः मम सहजकैङ्कर्यविधयः ॥ ३ ॥

देहासक्तात्मबुद्धिर्यदि भवति पदं साधु विद्यात्तृतीयं स्वातन्त्र्यान्धो यदि स्यात् प्रथममितरशेषत्वधीश्चेद्द्वितीयम् ।
आत्मत्राणोन्मुखश्चेन्नम इति च पदं बान्धवाभासलोलः शब्दं नारायणाख्यं विषयचपलधीश्चेच्चतुर्थीं प्रपन्नः ॥ ४ ॥

नेतृत्वं नित्ययोगं समुचितगुणजातं तनुख्यापनं चोपायं कर्तव्यभागं त्वथ मिथुनपरं प्राप्यमेवं प्रसिद्धम् ।
स्वामित्वं प्रार्थनां च प्रबलतरविरोधिप्रहाणं दशैतान् मन्तारं त्रायते चेत्यधिगतनिगमष्षट्पदोऽयं द्विखण्डः ॥ ५ ॥

ईशानां जगतामधीशदयितां नित्यानपायां श्रियं संश्रित्याश्रयणोचिताखिलगुणस्याङ्घ्री हरेराश्रये ।
इष्टोपायतया श्रिया च सहितायात्मेश्वरायार्थये कर्तुं दास्यमशेषमप्रतिहतं नित्यं त्वहं निर्ममः ॥ ६ ॥

मत्प्राप्त्यर्थतया मयोक्तमखिलं संत्यज्य धर्मं पुनः मामेकं मदवाप्तये शरणमित्यार्तोऽवसायं कुरु ।
त्वामेवं व्यवसाययुक्तमखिलज्ञानादिपूर्णो ह्यहं मत्प्राप्तिप्रतिबन्धकैर्विरहितं कुर्यां शुचं मा कृथाः ॥ ७ ॥

निश्चित्य त्वदधीनतां मयि सदा कर्माद्युपायान् हरे कर्तुं त्यक्तुमपि प्रपत्तुमनलं सीदामि दुःखाकुलः ।
एतज्ज्ञानमुपेयुषो मम पुनस्सर्वापराधक्षयं कर्तासीति दृढोऽस्मि ते तु चरमं वाक्यं स्मरन् सारथेः ॥ ८ ॥

॥ इति अष्टश्लोकी समाप्ता ॥

---

श्रीपराशरभट्टार्यैरनुगृहीतं मुक्तकश्लोकात्मकं

## ॥ श्रीरङ्गनाथस्तोत्रम् ॥

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः । श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

सप्तप्राकारमध्ये सरसिजमुकुलोद्भासमाने विमाने कावेरीमध्यदेशे मृदुतरफणिराड्भोगपर्यङ्कभागे ।
निद्रामुद्राभिरामं कटिनिकटशिरःपार्श्वविन्यस्तहस्तं पद्माधात्रीकराभ्यां परिचितचरणं रङ्गनाथं भजेऽहम् ॥ १ ॥

कस्तूरीकलितोर्ध्वपुण्ड्रतिलकं कर्णान्तलोलेक्षणं मुग्धस्मेरमनोहराधरदलं मुक्ताकिरीटोज्ज्वलम् ।
पश्यन्मानसपश्यतोहररुचः पर्यायपङ्केरुहं श्रीरङ्गाधिपतेः कदा नु वदनं सेवेय भूयोऽप्यहम् ॥ २ ॥

कदाऽहं कावेरीतटपरिसरे रङ्गनगरे शयानं भोगीन्द्रे शतमखमणिश्यामलरुचिम् ।
उपासीनः क्रोशन् मधुमथन! नारायण! हरे! मुरारे! गोविन्देत्यनिशमपनेष्यामि दिवसान् ॥ ३ ॥

कदाऽहं कावेरीविमलसलिले वीतकलुषो भवेयं तत्तीरे श्रममुषि वसेयं घनवने ।
कदा वा तं पुण्ये महति पुलिने मङ्गलगुणं भजेयं रङ्गेशं कमलनयनं शेषशयनम् ॥ ४ ॥

पूगीकण्ठद्वयससरसस्निग्धनीरोपकण्ठाम् आविर्मोदस्तिमितशकुनानूदितब्रह्मघोषाम् ।
मार्गेमार्गे पथिकनिवहैरुञ्छ्यमानापवर्गां पश्येयं तां पुनरपि पुरीं श्रीमतीं रङ्गधाम्नः ॥ ५ ॥

न जातु पीतामृतमूर्च्छितानां नाकौकसां नन्दनवाटिकासु । रङ्गेश्वर! त्वत्पुरमाश्रितानां रथ्याशुनामन्यतमो भवेयम् ॥

असंनिकृष्टस्य निकृष्टजन्तोः मिथ्यापवादेन करोषि शान्तिम् । ततो निकृष्टे मयि संनिकृष्टे कां निष्कृतिं रङ्गपते! करोषि ॥

श्रीरङ्गं करिशैलमञ्जनगिरिं तार्क्ष्याद्रिसिंहाचलौ श्रीकूर्मं पुरुषोत्तमं च बदरीनारायणं नैमिशम् ।
श्रीमद्द्वारवतीप्रयागमथुरायोध्यागयाः पुष्करं सालग्रामगिरिं निषेव्य रमते रामानुजोऽयं मुनिः ॥ ८ ॥

॥ इति श्रीरङ्गनाथस्तोत्रं समाप्तम् ॥

श्रीवात्स्यवरदगुरुभिरनुगृहीतं

## ॥ परमार्थश्लोकद्वयम् ॥

वन्देऽहं वरदार्यं तं वत्साभिजनभूषणम् । भाष्यामृतप्रदानाद्यः सञ्जीवयति मामपि ॥

सत्सङ्गाद्भवनिःस्पृहो गुरुमुखाच्छ्रीशं प्रपद्यात्मवान् प्रारब्धं परिभुज्य कर्मशकलं प्रक्षीणकर्मान्तरः ।
न्यासादेव निरङ्कुशेश्वरदयानिर्लूनमायान्वयः हार्दानुग्रहलब्धमध्यधमनिद्वारा बहिर्निर्गतः ॥ १ ॥

मुक्तोऽर्चिर्दिनपूर्वपक्षषडुदङ्मासाब्दवातांशुमद्ग्लौविद्युद्वरुणेन्द्रधातृमहितस्सीमान्तसिन्ध्वाप्लुतः ।
श्रीवैकुण्ठमुपेत्य नित्यमजडं तस्मिन् परब्रह्मणः सायुज्यं समवाप्य नन्दति समं तेनैव धन्यः पुमान् ॥ २ ॥

प्रातर्नित्यानुसन्धेयं परमार्थं मुमुक्षुभिः । श्लोकद्वयेन संक्षिप्तं सुव्यक्तं वरदोऽब्रवीत् ॥ ३ ॥

॥ इति परमार्थश्लोकद्वयं समाप्तम् ॥

श्रीवात्स्यवरदगुरुभिरनुगृहीतं

## ॥ परत्वादिपञ्चकम् ॥

वन्देऽहं वरदार्यं तं वत्साभिजनभूषणम् । भाष्यामृतप्रदानाद्यः सञ्जीवयति मामपि ॥

उद्यद्भानुसहस्रभास्वरपरव्योमास्पदं निर्मलज्ञानानन्दघनस्वरूपममलज्ञानादिभिष्षड्गुणैः ।
जुष्टं सूरिजनाधिपं धृतरथाङ्गाब्जं सुभूषोज्ज्वलं श्रीभूसेव्यमनन्तभोगिनिलयं श्रीवासुदेवं भजे ॥ १ ॥

आमोदे भुवने प्रमोद उत संमोदे च सङ्कर्षणं प्रद्युम्नं च तथाऽनिरुद्धमपि तान् सृष्टिस्थिती चाप्ययम् ।
कुर्वाणान् मतिमुख्यषड्गुणवरैर्युक्तांस्त्रियुग्मात्मकैः व्यूहाधिष्ठितवासुदेवमपि तं क्षीराब्धिनाथं भजे ॥ २ ॥

वेदान्वेषणमन्दराद्रिभरणक्ष्मोद्धारणस्वाश्रितप्रह्लादावनभूमिभिक्षणजगद्विक्रान्तयो यत्क्रियाः ।
दुष्टक्षत्रनिबर्हणं दशमुखाद्युन्मूलनं कर्षणं कालिन्द्या अतिपापकंसनिधनं यत्क्रीडितं तं नुमः ॥ ३ ॥

यो देवादिचतुर्विधेष्टजनिषु ब्रह्माण्डकोशान्तरे संभक्तेषु चराचरेषु निवसन्नास्ते सदाऽन्तर्बहिः ।
विष्णुं तं निखिलेष्वणुष्वणुतरं भूयस्सु भूयस्तरं स्वाङ्गुष्ठप्रमितं च योगिहृदयेष्वासीनमीशं भजे ॥ ४ ॥

श्रीरङ्गस्थलवेङ्कटाद्रिकरिगिर्यादौ शतेऽष्टोत्तरे स्थाने ग्रामनिकेतनेषु च सदा सान्निध्यमासेदुषे ।
अर्चारूपिणमर्चकाभिमतितः स्वीकुर्वते विग्रहं पूजां चाखिलवाञ्छितान् वितरते श्रीशाय तस्मै नमः ॥ ५ ॥

प्रातर्विष्णोः परत्वादिपञ्चकस्तुतिमुत्तमाम् । पठन् प्राप्नोति भगवद्भक्तिं वरदनिर्मिताम् ॥ ६ ॥

॥ इति परत्वादिपञ्चकं समाप्तम् ॥

श्रीकूरनारायणमुनिभिरनुगृहीतं

# ॥ श्रीसुदर्शनशतकम् ॥

रङ्गेशविज्ञप्तिकरामयस्य चकार चक्रेशनुतिं निवृत्तये । समाश्रयेऽहं वरपूरणीं यः तं कूरनारायणनामकं मुनिम् ॥

## ज्वालावर्णनं प्रथमम्

सौदर्शन्युज्जिहाना दिशि विदिशि तिरस्कृत्य सावित्रमर्चिः बाह्याबाह्यान्धकारक्षतजगदगदङ्कारभूम्ना स्वधाम्ना ।
दोःखर्जूदूरगर्जद्विबुधरिपुवधूकण्ठवैकल्यकल्या ज्वाला जाज्वल्यमाना वितरतु भवतां वीप्सयाऽ**भीप्सितानि** ॥

प्रत्युद्यातं मयूखैर्नभसि दिनकृतः प्राहसेवं प्रभाभिः भूमौ सौमेरवीभिर्दिवि वरिवसितं दीप्तिभिर्देवधाम्नाम् ।
**भूयस्यै भूतये** वः स्फुरतु सकलदिग्भ्रान्तसान्द्रस्फुलिङ्गं चाक्रं जाग्रत्प्रतापं त्रिभुवनविजयव्यग्रमुग्रं महस्तत् ॥

पूर्णे पूरैस्सुधानां सुमहति लसतस्सोमबिम्बालवाले बाहाशाखावरुद्धक्षितिगगनदिवश्चक्रराजद्रुमस्य ।
ज्योतिश्छद्मा प्रवालः प्रकटितसुमनस्सम्पदुत्तंसलक्ष्मीं पुष्णन्नाशामुखेषु प्रदिशतु भवतां सप्रकर्षं **प्रहर्षम्** ॥

आरादारात् सहस्राद्विसरति विमतक्षेपदक्षाद्यदक्षात् नाभेर्भास्वत्सनाभेर्निजविभवपरिच्छिन्नभूमेश्च नेमेः ।
आम्नायैरेककण्ठैः स्तुतमहिम महो माधवीयस्य हेतेः तद्वो दिक्ष्वेधमानं चतसृषु चतुरः पुष्यतात् **पूरुषार्थान्** ॥

श्यामं धामप्रसृत्या क्वचन भगवतः क्वापि बभ्रु प्रकृत्या शुभ्रं शेषस्य भासा क्वचन मणिरुचा क्वापि तस्यैव रक्तम् ।
नीलं श्रीनेत्रकान्त्या क्वचिदपि मिथुनस्यादिमस्येव चित्रां व्यातन्वानं वितानश्रियमुपचिनुताच्**छर्म** वश्चक्रभानम् ॥ ५॥

शंसन्त्युन्मेषमुच्छोषितपरमहसो भास्वतः कैटभारेः इन्धे सन्ध्येव नक्तञ्चरविलयकरी या जगद्वन्दनीया ।
बन्धूकच्छायबन्धुच्छविघटितघनच्छेदमेदस्विनी सा राथाङ्गी रश्मिभंगी प्रणुदतु भवतां प्रत्यहोत्थान**मेनः** ॥ ६ ॥

साम्यं धूम्याप्रवृद्ध्या प्रकटयति नभस्तारकाजालकानि स्फौलिङ्गीं यान्ति कान्तिं दिशति यदुदये मेरुरङ्गारशङ्काम् ।
अग्निर्मग्नार्चिरैक्यं भजति दिननिशावल्लभौ दुर्लभाभौ ज्वालावर्ताविव स्तः **प्रहरणपतिजं धाम** वस्तद्धिनोतु ॥ ७ ॥

दृष्टेऽधिव्योम चक्रे विकचनवजपासन्निकाशे सकाशं स्वर्भानुर्भानुरेष स्फुटमिति कलयन्नागतो वेगतोऽस्य ।
निष्टप्तो यैर्निवृत्तो विधुमिव सहसा स्प्रष्टुमद्यापि नेष्टे घर्मांशुं ते **घटन्तामहितविहतये** भानवो भास्वरा वः ॥ ८॥

देवं हेमाद्रितुङ्गं पृथुभुजशिखरं बिभ्रतीं मध्यदेशे नाभिद्वीपाभिरामामरविपिनवतीं शेषशीर्षासनस्थाम् ।
नेमिं पर्यायभूमिं दिनकरकिरणादृष्टसीमः परीत्य **प्रीत्यै** वश्चक्रवालाचल इव विलसन्नस्तु दिव्यास्त्ररश्मिः ॥ ९॥

एकं लोकस्य चक्षुर्द्विविधमपनुदत्कर्म नम्रत्रिनेत्रं दात्रर्थानां चतुर्णां गमयदरिगणं पञ्चतां षड्गुणाढ्यम् ।
सप्तार्चिश्शोषिताष्टापदनवकिरणश्रेणिरज्यद्दशाशं पर्यस्याद्द्वरशताङ्गावयवपरिबृढज्योतिरीतीस्सहस्रम् ॥ १० ॥

उच्चण्डे यच्छिखण्डे निविडयति नभःक्रोडमर्कोऽटति द्याम् अभ्यस्य प्रौढतापग्लपितवपुरपो बिभ्रतीरभ्रपङ्क्तीः ।
धत्ते शुष्यत्सुधोत्सो विधुरपमधुनः क्षौद्रकोशस्य साम्यं **रक्षन्त्वस्त्र**प्रभोस्ते रचितसुचरितव्युष्टयो घृष्टयो वः ॥ ११ ॥

पद्मौघो दीर्घिकाम्भस्यवनिधरतटे गैरिकाम्बुप्रपातः सिन्दूरं कुञ्जराणां दिशिदिशि गगने सान्ध्यमेघप्रबन्धः ।
पारावारे प्रवालो वनभुवि च तथा प्रेक्ष्यमाणः प्रमुग्धैः साधिष्ठं वः **प्रमोदं जनयतु** दनुजद्वेषिणस्त्वैषराशिः ॥

भानो ! भा नो त्वदीया स्फुरति कुमुदिनीमित्र ! ते कुत्र तेजः तारा: ! स्तारादवीरोऽस्यनल ! न भवतः स्वैरमैरम्मदार्चिः ! ।
शंसन्तीत्थं नभःस्था यदुदयसमये चक्रराजांशवस्ते युष्माकं **प्रौढतापप्रभवभवगदापक्रमाय** क्रमान्ताम् ॥ १३ ॥

जग्ध्वा कर्णेषु दूर्वाङ्कुरमरिसुदृशामक्षिषु स्वर्वधूनां पीत्वा चाम्भश्चरन्त्यः सवृषमनुगता वल्लवेनादिमेन ।
गावो वश्चक्रभर्तुः परममृतरसं प्रश्रितानां दुहानाः **ऋद्धिं** स्वालोकलुप्तत्रिभुवनतमसः सानुबन्धां ददन्ताम् ॥ १४ ॥

सेनां सेनां मघोनो महति रणमुखेऽलं भयं लम्भयन्तीः उत्सेकोष्णालुदोष्णां प्रथमदिविषदामावलीर्याऽवलीढे ।
विश्वं विश्वम्भराद्यं रथपदधिपतेर्लीलया पालयन्ती वृद्धिस्सा दीधितीनां **वृजिनमनुजनुर्मार्जयत्वार्जितं** वः ॥ १५ ॥

तप्ता स्वेनोष्मणेव प्रतिभटवपुषामस्त्रधारा धयन्ती प्राप्तेव क्षीबभावं प्रतिदिशमसकृत् तन्वती घूर्णितानि ।
वंशास्थिस्फोटशब्दं प्रकटयति पटून् याऽऽवहन्त्यट्टहासान् भा सा वः स्यन्दनाङ्गप्रभुसमुदयिनी स्पन्दतां **चिन्तिताय** ॥

देवैरासेव्यमानो दनुजभटभुजादण्डदर्पोष्मतप्तैः आशारोधोतिलङ्घी लुठदुडुपटलीलक्ष्यडिण्डीरपिण्डः ।
रिङ्गज्ज्वालातरङ्गत्रुटितरिपुतरुव्रातपातोग्रमार्गः चाक्रो वश्शोचिरोघश्**शमयतु दुरितापह्नवं** दाववह्निम् ॥ १७ ॥

भ्राम्यन्ती संश्रितानां भ्रमशमनकरी च्छन्नसूर्यप्रकाशा सूर्यालोकानुरूपा रिपुहृदयतमस्कारिणी निस्तमस्का ।
धारासंपातिनी च प्रकटितदहना दीप्तिरस्त्रेशितुर्वः चित्रा **भद्राय** विद्रावितविमतजना जायतामायताय ॥ १८ ॥

निन्ये वन्येव काशी दवशिखिजटिलज्योतिषा येन दाहं कृत्या वृत्त्या विलिल्ये शलभसुलभया यत्र चित्रप्रभावे ।
रुद्रोऽप्यद्रेर्दुहित्रा सह गहनगुहां यद्भयादभ्ययासीत् दिश्याद्विश्वार्चितो वस्स **शुभमनिभृतं** शौरिहेतिप्रतापः ॥ १९ ॥

उद्यन् बिम्बादुदारान्नयनजलहिमं मार्जयन् निर्जरीणाम् अज्ञानध्वान्तमूर्च्छाकरजनिरजनीभञ्जनव्यञ्जिताध्वा ।
न्यक्कुर्वाणो ग्रहाणां स्फुरणमपहरन्नर्चिषः पावकीयाः चक्रेशार्कप्रकाशो दिशतु दश दिशो व्यश्नुवानं **यशो वः** ॥

वर्गस्य स्वर्गधाम्नामपि दनुजनुषां विग्रहं निग्रहीतुं दातुं सद्यो(ऽ)बलानां श्रियमतिशयिनीं पत्रभङ्गानुवृत्त्या ।
योक्त्र देदीप्यते या युगपदपि पुरो भूतिमय्या प्रकृत्या सा वो नुद्यादविद्यां द्युतिरमृतरसस्यन्दिनी स्यान्दनाङ्गी ॥ २१ ॥

दाहंदाहं सपत्नान् समरभुवि लसद्भस्मना वर्त्मना यान् क्रव्यादप्रेतभूताद्यभिलषितपुषा प्रीतकापालिकेन ।
कङ्कालैः कालधौतं गिरिमिव कुरुते यः स्वकीर्तेर्विहर्तुं **घृष्टिस्सान्द्रष्टिकं** वस्**सकलमुपनय**त्वायुधाग्रेसरस्य ॥ २२ ॥

दग्धानां दानवानां सभसितनिचयैरस्थिभिस्सर्वशुभ्रां पृथ्वीं कृत्वाऽपि भूयो नवरुधिरझरीकौतुकं कौणपेभ्यः ।
कुर्वाणं बाष्पपूरैः कुचतटघुसृणक्षालनैस्तद्वधूनां **पापं पापच्यमानं शमय**तु भवतां शस्त्रराजस्य तेजः ॥ २३ ॥

मागान्मोषं ललाटानल इति मदनद्वेषिणा ध्यायतेव स्रष्ट्रा प्रोन्निद्रवासाम्बुजदलपटलप्लोषमुत्पश्यतेव ।
वज्राग्निर्मा स्म नाशं व्रजदिति चकितेनेव शक्रेण बद्धैः स्तोत्रैरस्त्रेश्वरस्य **द्यतु दुरितशतं** द्योतमाना द्युतिर्वः ॥२४॥

॥ इति ज्वालावर्णनं प्रथमम् ॥



## अथ नेमिवर्णनं द्वितीयम्

शस्त्रास्त्रं शात्रवाणां शलभकुलमिव ज्वालया लेलिहाना घोषैः स्वैः क्षोभयन्ती विघटितभगवद्योगनिद्रान् समुद्रान् ।
व्यूढोरःप्रौढचारुत्रुटितपटुरटत्कीकसक्षुण्णदैत्या नेमिस्सौदर्शनी वः **श्रियमतिशयिनीं** दाशतादाशताब्दम् ॥२५॥

धारा चक्रस्य तारागणकणविततिद्योतितद्युप्रचारा पारावाराम्बुपूरक्वथनपिशुनितोत्तालपातालयात्रा ।
गोत्राद्रिस्फोटशब्दप्रकटितवसुधामण्डलीचण्डयाना पन्थानं वः प्रदिश्यात् प्रशमनकुशला **पाप्मनामात्मनीनम्**॥२६॥

यात्रा या त्रातलोका प्रकटितवरुणत्रासमुद्रे समुद्रे सत्त्वासत्त्वासहोष्मा कृतसगरुदगस्पन्ददाना ददाना ।
हानिं हा निन्दितानां जगति परिषदां दानवीनां नवीनां चक्रे चक्रेशनेमिश्शमुपहरतु सा सप्रभावप्रभा वः ॥ २७॥

यत्रामिलान् दिधक्षौ प्रविशति बलिनो धाम निस्सीमधाम्नि प्रस्तापस्तापशीर्णैः प्रगुणितसिकतो मौक्तिकैश्शौक्तिकेयैः ।
राशिर्वारामपारां प्रकटयति पुनर्वैरिदाराश्रुपूरैः वृद्धिं निर्याति **निर्यापयतु** स **दुरितान्यस्त्र**राजप्रधिर्वः ॥ २८ ॥

कक्ष्यातौल्येन कद्रूतनयफणमणीन् कल्यदीपस्य युञ्जन् पातालान्तःप्रपाती निखिलमपि तमः स्वेन धाम्ना निगीर्य ।
दैतेयप्रेयसीनां वमति हृदि हतप्रेयसां भूयसा यः चक्राग्रीयाग्रदेशो **दहतु विलसितं बह्वंहसावंहसां** वः ॥ २९ ॥

कृष्णाम्भोदस्य भूषा कृतनयननयव्याहतिर्भार्गवस्य प्राप्तामावेदयन्ती प्रतिभटसुदृशामुद्भटां बाष्पवृष्टिम् ।
निष्टप्ताष्टापदश्रीस्सममरचमूगर्जितैरुज्जिहाना **कीर्तिं वः** केतकीभिः प्रथयतु सदृशीं चञ्चला चक्रधारा ॥ ३० ॥

वप्राणां भेदनीं यः परिणतिमखिलश्लाघनीयां दधानः क्षुण्णां नक्षत्रमालां दिशिदिशि विकिरन् विद्युता तुल्यकक्ष्यः ।
निर्याणेनोत्कटेन प्रकटयति नवं दानवारिप्रकर्षं चक्राधीशस्य **भद्रो वशयतु भव**तां स प्रधिश्चित्तवृत्तिम् ॥ ३१ ॥

नाकौकश्शत्रुजत्रुत्रुटनविघटितस्कन्धनीरन्ध्रनिर्यन्नव्यक्रव्यास्रहव्यग्रसनरसलसज्ज्वालजिह्वालवह्निम् ।
यं दृष्ट्वा सांयुगीनं पुनरपि विदधत्याशिषो वीर्यवृद्ध्यै गीर्वाणा निर्वृणाना **वितरतु स जयं** विष्णुहेतिप्रधिर्वः॥ ३२॥

धन्वाधन्वस्य धारासलिलमिव धनं दुर्गतस्येव दृष्टिः जात्यन्धस्येव पङ्गोः पदविहृतिरिव प्रीणनी प्रेमभाजाम् ।
पत्युर्मायाक्रियायां प्रकटपरिणतिर्विश्वरक्षाक्षमायां **मायामायामिनीं वस्त्रुटयतु** महती नेमिरस्त्रेश्वरस्य ॥ ३३ ॥

त्राणं या विष्टपानां वितरति च यया कल्प्यते कामपूर्तिः न स्थातुं यत्पुरस्तात् प्रभवति कलयाऽप्योषधीनामधीशः ।
उन्मेषो याति यस्या न समयनियतिं **सा श्रियं वः प्रदेया**त् न्यक्कृत्य द्योतमाना त्रिपुरहरदृशं नेमिरस्त्रेश्वरस्य ॥

नक्षत्रक्षोदभूतिप्रकरविकरणश्वेतिताशावकाशा जीर्णैः पर्णैरिव द्यां जलधरपटलैश्चूर्णितैरूर्णुवाना ।
आजावाजानवाजानतरिपुजनतारण्यमावर्तमाना नेमिर्वात्येव चाक्री **प्रणुदतु भवतां संहतं पापतूलम्** ॥ ३५ ॥

क्षिप्त्वा नेपथ्यशाटीमिव जलदघटां जिष्णुकोदण्डचित्रां तारापुञ्जं प्रसूनाञ्जलिमिव विपुले व्योमरङ्गे विकीर्य ।
निर्वेदग्लानिचिन्ताप्रभृतिपरवशानन्तरा दानवेन्द्रान् नृत्यन्नानालयाढ्यं नट इव **तनुतां शर्म** चक्रप्रधिर्वः ॥३६॥

दौर्गत्यप्रौढतापप्रतिभटविभवा वित्तधारास्सृजन्ती गर्जन्ती चीत्क्रियाभिर्ज्वलदनलशिखोद्दामसौदामनीका ।
अव्यात् क्रव्याद्वधूटीनयनजलभरैर्दिक्षु नव्याननाव्यान् पुष्यन्ती सिन्धुपूरान् रथचरणपतेर्नेमिकादम्बिनी वः ॥

सन्दोहं दानवानामजसमजमिवालभ्य जाज्वल्यमाने वह्नावह्नाय जुह्वत्त्रिदशपरिषदे स्वस्वभागप्रदायी ।
स्तोत्रैर्ब्रह्मादिगीतैर्मुखरपरिसरं श्लाघ्यशस्त्रप्रयोगं प्राप्तस्सङ्ग्रामसत्रं प्रधिरसुररिपोः **प्रार्थितं प्रस्तुतां** वः ॥ ३८ ॥

॥ इति नेमिवर्णनम् ॥

## अथ अरवर्णनं तृतीयम्

उत्पातालातकल्पान्यसुरपरिषदामाहवप्रार्थिनीनाम् अध्वानध्वान्तबोधक्षपणचणतमःक्षेपदीपोपमानि ।
त्रैलोक्यागारभारोद्वहनसहमणिस्तम्भसम्पत्सखानि **त्रायन्तामन्तिमायां विपदि** सपदि वोऽराणि सौदर्शनानि ॥३९॥

ज्वालाजालप्रवालस्तबकितशिरसो नाभिमावालयन्त्यः सिक्ता रक्ताम्बुपूरैरशकलितवपुषां शात्रवानीकिनीनाम् ।
चक्राक्रीडप्ररूढा भुजगशयभुजोपघ्ननिघ्नप्रचाराः पुष्यन्त्यः कीर्तिपुष्पाण्यरकनकलताः **प्रीतये** वः प्रथन्ताम् ॥ ४० ॥

ज्वालाजालाब्धिमुद्रं क्षितिवलयमिवाबिभ्रती नेमिचक्रं नागेन्द्रस्येव नाभेः फणपरिषदिव प्रौढरत्नप्रकाशा ।
दत्तां वो दिव्यहेतेर्**मति**मरविततिः ख्यातसाहस्रसङ्ख्या सङ्ख्यावत्सङ्घचित्तश्रवणहरगुणस्यन्दिसन्दर्भगर्भाम् ॥ ४१ ॥

ब्रह्मेशोपक्रमाणां बहुविधविमतक्षोदसंमोदितानां सेवायै देवतानां दनुजकुलरिपोः पिण्डिकाद्यङ्गभाजाम् ।
तत्तद्धामान्तसीमाविभजनविधये मानदण्डायमना **भूमानं** भूयसा वो दिशतु दशशती भास्वराणामराणाम् ॥ ४२ ॥

ज्वालाकल्लोलमालानिबिडपरिसरां नेमिवेलां दधाने पूर्वेणाक्रान्तमध्ये भुवनमयहविर्भोजिना पूरुषेण ।
प्रस्फूर्जत्प्राज्यरत्ने रथपदजलधावेधमानैः स्फुलिङ्गैः **भद्रं** वो विद्रुमाणां श्रियमरविततिर्विस्तृणाना विधत्ताम् ॥ ४३ ॥

नासीरस्वैरभग्नप्रतिभटरुधिरासारधारावसेकान् एकान्तस्मेरपद्मप्रकरसहचरच्छायया प्राप्य नाभ्या ।
मुक्तानीवाङ्कुराणि स्फुरदनलशिखादर्शितप्राक्प्रवालान्यव्याघातेन **भव्यं प्रददतु** भवतां दिव्यहेतेरराणि ॥ ४४ ॥

दावोल्कामण्डलीव द्रुमगणगहने बाडबस्येव वह्नेः ज्वालावृद्धिर्महाब्धौ प्रवयसि तमसि प्रातरर्कप्रभेव ।
चक्रे या दानवानां हयकरटिघटासङ्कटे जाघटीति **प्राज्यं सा** वः प्रदेयात् पदमरपरिषत् पद्मनाभायुधस्य ॥४५॥

तापाद्दैत्यप्रतापातपसमुपचितात् त्रायमाणं त्रिलोकीं लोलैर्ज्वालाकलापैः प्रकटयदभितश्चीनपट्टाञ्चलानि ।
छत्राकारं शलाका इव कनककृताश्शौरिदोर्दण्डलग्नं भूयासुर्भूषयन्त्यो रथचरणमरस्फूर्तयः **कीर्तये** वः ॥ ४६ ॥

नाभीशालानिखातां नहनसमुचितां वैरिलक्ष्मीवशानां संयद्वारीद्धतानां समनुविदधती काञ्चनालानपङ्क्तिम् ।
राज्या च प्राज्यदैत्यव्रजविजयमहोत्तम्भितानां भुजानां तुल्या चक्रारमाला तुलयतु भवतां **तूलवच्छत्रुलोकम्** ॥४७॥

आनेमेश्चक्रवालात्त्विष इव वितताः पिण्डिकाचण्डदीप्तेः दीप्ता दीपा इवाराद्गहनरणतमीगाहिनः पूरुषस्य ।
शाणे रेखायितानां रथचरणमये शत्रुशौण्डीर्यहेम्नां रेखाः प्रत्यग्रलग्ना इव भुवनमरश्रेणयः प्रीणयन्तु ॥ ४८ ॥

दीप्तैरर्चिःप्ररोहैर्दलवति विधृते बाहुनालेन विष्णोः उद्यत्प्रद्योतनाभं प्रथयति पुरुषं कर्णिकावर्णिकायाम् ।
चूडालं वेदमौलिं कलयति कमले चक्रनाम्नोपलक्ष्ये लक्ष्मीं स्फारामराणि प्रतिविदधतु वः केसरश्रीकराणि ॥ ४९ ॥

धातुस्यन्दैरमन्दैः कलुषितवपुषो निर्झराम्भःप्रपातान् अर्चिष्मत्या स्वमूर्त्या रथचरणगिरेर्नेमिनाभीतटस्य ।
व्याकुर्वाणाऽरपङ्क्तिर्वितरतु **विभुताविस्तृतिं** वित्तकोटीकोटीरच्छत्रपीठीकटककरिघटाचामरस्रग्विणीं वः ॥ ५० ॥

॥ इति अरवर्णनं तृतीयम् ॥

## अथ नाभिवर्णनं चतुर्थम्

ऐक्येन द्वादशानामशिशिरमहसां दर्शयन्ती प्रवृत्तिं दत्तः स्वर्लोकलक्ष्म्यास्तिलक इव मुखे पद्मरागद्रवेण ।
देयाद्वैतेयदर्पक्षतिकरणरणप्रीणिताम्भोजनाभिः नाभिर्नाभित्वमुर्व्यास्सुरपतिविभवस्पर्शि सौदर्शनी वः ॥ ५१ ॥

शस्त्रश्यामे शताङ्गक्षितिभृति तरलैरुत्तरङ्गे तुरङ्गैः त्वङ्गन्मातङ्गनक्रे कुपितभटमुखच्छायमुग्धप्रवाले ।
अस्तोकं प्रस्नुवाना प्रतिभटजलधौ पाटवं बाडवस्य **श्रेयो** वस्संविधत्तां श्रितदुरितहरा श्रीधरास्त्रस्य नाभिः ॥

ज्वालाचूडालकालानलचलनसमाडम्बरा सांपरायं याऽसावासाद्य मायत्सुरसुभटभुजास्फोटकोलाहलाढ्यम् ।
दैत्यारण्यं वहन्ती विरचयति यशोभूतिशुभ्रां धरित्रीं सा वश्चक्रस्य नक्रस्यदमृदितगजत्रायिणी नाभिरव्यात् ॥

विन्दन्ती सान्ध्यमर्चिर्विदलितवपुषः प्रत्यनीकस्य रक्तैः स्फायन्नक्षत्रराशिर्दिशिदिशि कणशः कीकसैः कीर्यमाणैः ।
नाकौकःपक्ष्मलाक्षीनवमदहसितच्छायया चन्द्रपादान् राथाङ्गी विस्तृणाना रचयतु **कुशलं** पिण्डिकायामिनी वः ॥

निस्सीमं निस्सृताया भुजधरणिधराघाटतः कैटभारेः आशाकूलङ्कषर्द्धेरहितबलमहाम्भोधिमासादयन्त्याः ।
चक्रज्वालापगायाश्चलदरलहरीमालिकादन्तुरायाः विभ्रत्यावर्तभावं भ्रमयतु भुवने पिण्डिका वः **प्रशस्तिम्** ॥

पाणौकृत्याहवाग्रे प्रतिभटविजयोपार्जितां वीरलक्ष्मीम् आनीतायास्ततोऽस्याः स्वसविधमसुरद्वेषिणा पूरुषेण ।
प्रासादं वासहेतोर्विरचितमरुणै रश्मिभिस्सूचयन्ती नाभिर्वो निर्मिमीतां रथचरणपतेर्**निर्वृतिं** निर्विघाताम् ॥५६॥

डिण्डीरापाण्डुगण्डैररियुवतिमुखैः पिण्डिका कृष्णहेतेः उच्चण्डाश्रुप्रवर्षैरुपरततिलकैरुक्तशौण्डीर्यचर्या ।
द्वित्रग्रामाधिपत्यद्रुहिणमदमषीदूषिताक्षक्षमाभृत्सेवाहेवाकपाकं शमयतु भवतां कर्म **शर्म**प्रतीपम् ॥ ५७ ॥

पर्याप्तामुन्नतिं या प्रथयति कमलं या तिरोभाव्य भाति स्रष्टुस्सृष्टेर्द्वितीयः कुवलयमहितं या बिभर्ति स्वरूपम् ।
भूम्ना स्वेनान्तरिक्षं कबलयति च या सा विचित्रा विधत्तां दैतेयारातिनाभिर्द्रविणपतिपदद्रोहि**णीं संपदं** वः ॥

वाणीवाङ्गैश्चतुर्भिः सदसि सुमनसां द्योतमानस्वरूपा बाह्यन्तःस्था मुरारेरभिमतमखिलं श्रीरिव स्पर्शयन्ती ।
दुर्गैवोग्राकृतिर्या त्रिभुवनजननस्थेमसंहारधुर्या मर्यादालङ्घनं वः क्षपयतु महती हेतिवर्यस्य नाभिः ॥ ५९ ॥

स्रग्भिस्सन्तानजाभिर्मधुरमधुरसस्यन्दसन्दोहिनीभिः पाटीरैः प्रौढचन्द्रातपचयसुषमालोपनैर्लेपनैश्च ।
धूपैः कालागरूणामपि सुरसुदृशो विस्रमर्चासु यस्याः गन्धं रुन्धन्ति सा वश्चिरमसुरभिदो नाभि**रव्यादभव्यात्** ॥

अंहस्संहृत्य दग्ध्वा प्रतिजनिजनितं प्रौढसंसारवन्यादूराध्वन्यानधन्यान्महति विनतिभिर्धामनि स्थापयन्ती ।
विश्रान्तिं शाश्वतीं या नयति रमयतां चक्रराजस्य नाभिः संयन्मोमुह्यमानत्रिदशरिपुदशासाक्षिणी साऽक्षिणी वः ॥

॥ इति नाभिवर्णनं चतुर्थम् ॥

## अथ अक्षवर्णनं पञ्चमम्

श्रुत्वा यन्नामशब्दं श्रुतिपथकटुकं देवनक्रीडनेषु स्वैरैरस्वैरवक्त्रो भयविवशधियः कातरन्यस्तशाराः ।
मन्दाक्षं यान्त्यमन्दं प्रतियुवतिमुखैर्दर्शितोत्प्रासदर्पैः अक्षं सौदर्शनं तत्क्षपयतु भवतामेधमानां धनायाम् ॥ ६२॥

व्यस्तस्कन्धं विशीर्णप्रसवपरिकरं प्रत्तपत्रोपमर्दं संयद्वर्षासु तर्षातुरखगपरिषत्पीतरक्तोदकासु ।
अक्षं रक्षस्तरूणामशनिवदशनैरापतन्मूर्ध्निमूर्ध्नि स्तादस्त्राधीशितुर्वः स्तबकितयशसे द्वेषिणां प्लोषणाय ॥ ६३ ॥

दीक्षां सङ्ग्रामसत्रे महति कृतवतो दीप्तिभिस्संहताभिः जिह्वाले सप्तजिह्वे दनुजकुलहविर्जुह्वतो नेमिजुह्वा ।
वैकुण्ठास्त्रस्य कुण्डं महदिव विलसत्पिण्डिकावेदिमध्ये दिश्याद्दिव्यर्द्धिदेश्यं पदमिह भवतामक्षतोन्मेषमक्षम् ॥ ६४ ॥

तुङ्गाद्दोरद्रिशृङ्गाद्दनुजविजयिनः स्पष्टदानोद्यमानां शत्रुस्तम्बेरमाणां शिरसि निपततः स्रस्तमुक्तास्थिपुञ्जे ।
रक्तैरभ्यक्तमूर्तेर्विदलनगलितैर्व्यक्तवीरायितर्द्धेः हर्यक्षस्यारिभङ्गं जनयतु जगतामीडितं क्रीडितं वः ॥ ६५ ॥

उन्मीलत्पद्मरागं कटकमिव धृतं बाहुना यन्मुरारेः दीप्तान् रश्मीन्दधानं नयनमिव यदुत्तारकं विष्टपस्य ।
चक्रेशार्कस्य यद्वा परिधिरभिदधद्दैत्यहत्यामिव द्रागक्षं पक्षे पतित्वा परिघटयतु वस्तद्द्विषां प्रतिष्ठाम् ॥ ६६ ॥

क्रीडत्प्राक्क्रोडदंष्ट्राहतिदलितहिरण्याक्षवक्षःकवाटप्रादुर्भूतप्रभूतक्षतजसमुदितारुण्यमुद्रं समुद्रम् ।
उन्मीलत्किंशुकाभैरुपहसदमितैरंशुभिस्संशयघ्नीम् अक्षं चक्रस्य दत्तामघशतशमनं दाशुषीं शेमुषीं वः ॥ ६७ ॥

पद्मोल्लासप्रदं यज्जनयति जगतीमेधमानप्रबोधां यस्य च्छायासमाना लसति परिसरे रोहिणी तारकाग्र्या ।
नानाहेत्युन्नतत्वं प्रकटयति च यत्प्राप्तकृष्णप्रयाणं त्रेधा भिन्नस्य धाम्नस्समुदय इव तत्पातु वश्चाक्रमक्षम् ॥ ६८ ॥

शोचिर्भिः पद्मरागद्रवसमसुषमैश्शोभमानावकाशं प्रत्यग्राशोकरागप्रतिभटवपुषा भूषितं पूरुषेण ।
अन्तः स्वच्छन्दमग्नोत्थितभृगुतनयं क्षत्रियाणां क्षतानाम् आरब्धं शोणितौघैस्सर इव भवतो दिव्यहेत्यक्षमव्यात् ॥

मत्तानामिन्द्रियाणां कृतविषयमहाकाननक्रीडनानां सृष्टं चक्रेश्वरेण ग्रहणधिषणया वारिवद्वारणानाम् ।
गम्भीरं यन्त्रगर्तं कमपि कृतधियो मन्वते यत्प्रदेयात् अस्थूलां संविदं वस्त्रिजगदभिमतस्थूललक्षं तदक्षम् ॥ ७० ॥

प्राणादीन् संनियम्य प्रणिहितमनसां योगिनामन्तरङ्गे तुङ्गं सङ्कोच्य रूपं विरचितदहराकाशकृच्छ्रासिकेन ।
प्राप्तं यत्पूरुषेण स्वमहिमसदृशं धाम कामप्रदं वः भूयात् तद्भूर्भुवस्स्वस्त्रयवरिवसितं पुष्कराक्षायुधाक्षम् ॥ ७१ ॥

विद्रान्वीध्रेण धाम्ना चरणनखभुवा बद्धवासस्य मध्ये चक्राध्यक्षस्य बिभ्रत्परिहसितजपापुष्पकोशान्प्रकाशान् ।
शुभ्रैरभ्रैरदभ्रैश्शरदि तत इतो व्योम विभ्राजमानं प्रातस्त्यादित्यरोचिस्ततमिव भवतः पातु राथाङ्गमक्षम् ॥ ७२ ॥

श्रीवाणीवाङ्मृडान्यो विदधति भजनं शक्तयो यस्य दिक्षु प्राह व्यूहं यदाद्यं प्रथममपि गुणं भारती पाञ्चरात्री ।
घोरां शान्तां च मूर्तिं प्रथयति पुरुषः प्राक्तनः प्रार्थनाभिः भक्तानां यस्य मध्ये दिशतु तदनघामक्षमध्यक्षतां वः ॥

रक्षःपक्षेण रक्षत्क्षतममरगणं लक्ष्यवैलक्ष्यमाजौ लक्ष्मीमक्षीयमाणां वलमथनभुजे वज्रशिक्षानपेक्षे ।
निक्षिप्य क्षिप्रमध्यक्षयति जगति यदक्षतां दिव्यहेतेः अक्षामामक्षमां तत्क्षपयतु भवतामक्षजिल्लक्ष्मक्षम् ॥ ७४ ॥

॥ इति अक्षवर्णनं पञ्चमम् ॥

## अथ पुरुषवर्णनं षष्ठम्

ज्योतिश्चूडालमौलिस्त्रिनयनवदनष्षोडशोत्तुङ्गबाहुः प्रत्यालीढेन तिष्ठन्प्रणवशशधराधारषट्कोणवर्ती ।
निस्सीमेन स्वधाम्ना निखिलमपि जगत्क्षेमवन्निर्मिमाणः भूयात् सौदर्शनो वः प्रतिभटपरुषः पूरुषः पौरुषाय ॥ ७५ ॥

वाणी पौराणिकी यं प्रथयति महितं प्रक्षेणं कैटभारेः शक्तिर्यस्येषुदंष्टानखपरशुमुखव्यापिनी तद्विभूत्याम् ।
कर्तुं यत्तत्त्वबोधो न निशितमतिभिर्नारदाद्यैश्च शक्यः दैवीं वो मानुषीं च क्षिपतु स विपदं दुस्तरामस्त्रराजः ॥७६॥

रूढस्तारालवाले रुचिरदलचयः श्यामलैश्शस्त्रजालैः ज्वालाभिस्सप्रवालः प्रकटितकुसुमो बद्धसङ्घैः स्फुलिङ्गैः ।
प्राप्तानां पादमूलं प्रकृतिमधुरया च्छायया तापहृद्वः दत्तामुद्दोःप्रकाण्डः फलमभिलषितं विष्णुसङ्कल्पवृक्षः ॥ ७७ ॥

धाम्नामैरम्मदानां निचयमिव चिरस्थायिनां द्वादशानां मार्तण्डानां समूढं मह इव बहुलं रत्नभासामिवर्द्धिम् ।
अर्चिस्सङ्घातमेकीकृतमिव शिखिनां बाडबाग्रेसराणां शङ्कन्ते यस्य रूपं स भवतु भवतां तेजसे चक्रराजः ॥ ७८॥

उग्रंपश्याक्षमुद्यद्भ्रुकुटि समकुटं कुण्डलि स्पष्टदंष्ट्रं चण्डास्त्रैर्बाहुदण्डैर्लसदनलसमक्षौमलक्ष्योरुकाण्डम् ।
प्रत्यालीढस्थपादं प्रथयतु भवतां पालनव्यग्रमग्रे चक्रेशोऽकालकालेरितभटविकटाटोपलोपाय रूपम् ॥ ७९ ॥

चक्रं कुन्तं कृपाणं परशुहुतवहावङ्कुशं दण्डशक्ती शङ्खं कोदण्डपाशौ हलमुसलगदावज्रशूलांश्च हेतीन् ।
दोर्भिस्सव्यापसव्यैर्दधदतुलबलस्तम्भितारातिदर्पः व्यूहस्तेजोऽभिमानी नरकविजयिनो जृम्भतां संपदे वः ॥ ८० ॥

पीतं केशे रिपोरप्यसृजि रथपदे संश्रितेऽप्युत्कटाक्षं चन्द्राधःकारि यन्त्रे वपुषि च दलने मण्डले च स्वराङ्कम् ।
हस्ते वक्त्रे च हेतिस्तवकितमसमं लोचने मोचने च स्तादस्तोकाय धाम्ने सुरवरपरिषत्सेवितं दैवतं वः ॥ ८१ ॥

चित्राकारैः खचारैर्मितसकलजगज्जागरूकप्रतापः मन्त्रं तन्त्रानुरूपं मनसि कलयतो मानयन्नात्मगुह्यान् ।
पञ्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयो धाम षण्णां गुणानां लक्ष्मीं राजासनस्थो वितरतु भवतां पूरुषश्चक्रवर्ती ॥ ८२ ॥

अक्षावृत्ताभ्रमालान्यरविवरलुठच्चन्द्रचण्डद्युतीनि ज्वालाजालावलीढस्फुटदुडुपटलीपाण्डुदिङ्मण्डलानि ।
चक्रान्ताक्रान्तचक्राचलचलितमहीचक्रवालार्तशेषाण्यस्त्रग्रामाग्रिमस्य प्रददतु भवतां प्रार्थितं प्रस्थितानि ॥ ८३ ॥

शूलं त्यक्तात्मशीलं सृणिरणुकघृणिः पट्टिसः स्पष्टसादः शक्तिश्शालीनशक्तिः कुलिशमकुशलं कुण्ठधारः कुठारः ।
दण्डश्चण्डत्वशून्यो भवति तनु धनुर्यत्पुरस्तात्स वः स्तात् ग्रस्ताशेषास्त्रगर्वो रथचरणपतिः कर्मणे शार्मणाय ॥

क्षुण्णाजानेयवृन्दं क्षुभितरथगणं सत्रसान्नाय्ययूथं क्ष्वेलासंरम्भहेलाकलकलविगलत्पूर्वगीर्वाणगर्वम् ।
कुर्वाणस्साम्परायं रथचरणपतिः स्थेयसीं वः प्रशस्तिं दुग्धां दुग्धाब्धिभासं भयविवशशुनासीरनासीरवर्ती ॥ ८५ ॥

द्रुह्यद्दोश्शालिमालिप्रहरणरभसोत्तानिते वैनतेये विद्राति द्राक्प्रयुक्तः प्रधनभुवि परावर्तमानेन भर्त्रा ।
निर्जित्य प्रत्यनीकं निरवधिकचरद्धास्तिकाश्वीयरथ्यं पथ्यं विश्वस्य दाश्वान् प्रथयतु भवतो हेतिरिन्द्रानुजस्य ॥८६॥

नन्दिन्यानन्दशून्ये गलति गणपतौ व्याकुले बाहुलेये चण्डे चाकित्यकुण्ठे प्रमथपरिषदि प्राप्तवत्यां प्रमाथम् ।
उच्छिद्याजौ बलिष्ठं बलिजभुजवनं यो ददावादिभिक्षोः भिक्षां तत्प्राणरूपां स भवदकुशलं कृष्णहेतिः क्षिणोतु ॥

रक्तौघाभ्यक्तमुक्ताफललुलितलसद्वीचिवृद्धौ महाब्धौ सन्ध्यासम्बद्धताराजलधरशबलाकाशनीकाशकान्तौ ।
गम्भीरारम्भमम्भश्चरमसुरकुलं वेदविघ्नं विनिघ्नन् निर्विघ्नं वः प्रसूतां व्यपगतविपदं सम्पदं चक्रराजः ॥ ८८ ॥

काशीविप्लोषचैद्यक्षपणधरणिजध्वंससूर्यापिधानग्राहद्वेधात्वमालित्रुटनमुखकथावस्तुसत्कीर्तिगाथाः ।
गीयन्ते किन्नरीभिः कनकगिरिगुहागेहिनीभिर्यदीयाः देयाद्दैतेयवैरी स सकलभुवनश्लाघनीयां श्रियं वः ॥ ८९ ॥

नानावर्णान् विवृण्वन्विरचितभुवनानुग्रहान् विग्रहान् यः चक्रेष्वष्टासु मृष्टासुरवरतरुणीकण्ठकस्तूरिकेषु ।
आतारादर्णमालावधिषु वसति यः पूरुषो वः स वध्यात् व्यध्वैरुद्भूतसत्त्वैरुपहितमत्रहिर्ध्वान्तमध्वान्तवर्ती ॥ ९० ॥

द्वात्रिंशत्षोडशाष्टप्रभृतिपृथुभुजस्फूर्तिभिर्मूर्तिभेदैः कालाद्ये चक्रषट्के प्रकटितविभवः पञ्चकृत्यानुरूपम् ।
अर्थानामर्थितानामहरहरखिलं निर्विलम्बैर्विलम्बैः कुर्वाणो भक्तवर्गं कुशलिनमवतादायुधग्रामणीर्वः ॥ ९१ ॥

कोणैरर्णैस्सरोजैरपि कपिशगुणैष्षड्भिरुद्भिन्नशोभे श्रीवाणीपूर्विकाभिर्दधति विकसतश्शक्तिभिः केशवादीन् ।
तारान्ते भूपुरादौ रथचरणगदाशार्ङ्गखड्गाङ्किताशे यन्त्रे तन्त्रोदिते वः स्फुरतु कृतपदं लक्ष्म लक्ष्मीसखस्य ॥ ९२ ॥

दंष्ट्राकान्त्या कडारे कपटकिटितनोः कैटभारेरधस्तात् ऊर्ध्वं हासेन विद्धे नरहरिवपुषो मण्डले वासवीये ।
प्राक्प्रत्यक्सान्ध्यसान्द्रच्छविभरभरिते व्योम्नि विद्योतमानः दैतेयोत्पातशंसी रविरिव रहयत्वस्त्रराजो रुजं वः ॥ ९३ ॥

कोणे क्वापि स्थितोऽपि त्रिभुवनविततश्चन्द्रधामाऽपि रूक्षः रुक्मच्छायोऽपि कृष्णाकृतिरनलमयोऽप्याश्रितत्राणकारी ।
धारासारोऽपि दीप्तो दिनकररुचिरोऽप्युल्लसत्तारकश्रीः चक्रेशश्चित्रभूमा वितरतु विमतत्रासनं शासनं वः ॥ ९४ ॥

शुक्रश्शक्र ! स्तवस्ते सह दहन ! कलां काल ! तेऽयं न कालः किं वो रक्षांसि ! रक्षा तव फलतु पते ! यादसां पादसेवा ।
वायो ! हृद्योऽसि भर्तुस्त्यज धनद ! मदं सेव्यतां त्र्यंबकेति प्राहुर्यद्यन्त्रपालास्स दनुजविजयी हन्तु तन्द्रालुतां वः ॥

गायत्र्यर्णारचक्रे प्रथममनुसखस्मेरपत्रारविन्दे बिम्बं वह्नेस्त्रिकोणं वहति जयिजयाद्यष्टशक्तौ निषण्णा ।
शोकं वोऽशोकमूले पदसविधलसद्भीमभीमाक्षभीमा पुंसो दिव्यास्त्रधामा पुरुषहरिमयी मूर्तिरस्य त्वपूर्वा ॥ ९६ ॥

पाश्चात्याशोकपुष्पप्रकरनिपतितैः प्राप्तरागं परागैः सन्ध्यारोचिस्सगन्धैः स्वपदशशधरं प्रेक्ष्य तारानुषक्तम् ।
पद्मानाबद्धकोशानिव सुरनिवहैरञ्जलीन् कल्प्यमानान् चक्राधीशोऽभिनन्दन् प्रदिशतु सदृशीमुत्तमश्लोकतां वः ॥

रक्ताशोकस्य वेदस्य च विहितपदं प्राप्तशाखस्य मूले चक्रैरस्त्रैस्तदाद्यैरपि महितचतुर्द्विश्चतुर्बाहुदण्डम् ।
आसीनं भासमानं स्थितमपि भयतस्त्रायतां तत्त्वमेकं पश्चात् पूर्वत्र भागे स्फुटतरहरितामानुषं जानुषाद्वः ॥ ९८ ॥

प्राणे दत्तप्रयाणे मुषितदिशि दृशि त्यक्तसारे शरीरे मत्यां व्यामोहवल्यां सतमसि मनसि व्याहते व्याहृते च ।
चक्रान्तर्वर्ति मृत्युप्रतिभयमुभयाकारचित्रं पवित्रं तेजस्तत्तिष्ठतां वस्त्रिदशकुलधनं त्रीक्षणं तीक्ष्णदंष्ट्रम् ॥ ९९ ॥

यस्मिन् विन्यस्य भारं विजयिनि जगतां जङ्गमस्थावराणां लक्ष्मीनारायणाख्यं मिथुनमनुभवत्यत्युदारान् विहारान् ।
आरोग्यं भूतिमायुः कृतमिह बहुना यद्यदास्थापदं वः तत्तत्सद्यः समस्तं दिशतु स पुरुषो दिव्यहेत्यक्षवर्ती ॥१००॥

पद्यानां तत्त्वविद्यायुमणिगिरिशवीथ्यङ्गसंख्याधाराणाम् अर्चिष्वङ्गेषु नेम्यादिषु च परमतः पुंसि षड्विंशतेश्च ।
सङ्ख्यैस्सौदर्शनं यः पठति कृतमिदं कूरनारायणेन स्तोत्रं निर्विष्टभोगो भजति स परमां चक्रसायुज्यलक्ष्मीम् ॥१०१॥

इति पुरुषवर्णनं षष्ठम् ।

इति श्रीकूरनारायणमुनिवरानुगृहीतं श्रीसुदर्शनशतकं समाप्तम् ॥

## ॥ पञ्चायुधस्तोत्रम् ॥

स्फुरत्सहस्रारशिखातितीव्रं सुदर्शनं भास्करकोटितुल्यम् । सुरद्विषां प्राणविनाशि विष्णोः चक्रं सदाऽहं शरणं प्रपद्ये ॥
विष्णोर्मुखोत्थानिलपूरितस्य यस्य ध्वनिर्दानवदर्पहन्ता । तं पाञ्चजन्यं शशिकोटिशुभ्रं शङ्खं सदाऽहं शरणं प्रपद्ये ॥२॥
हिरण्मयीं मेरुसमानसारां कौमोदकीं दैत्यकुलैकहन्त्रीम् । वैकुण्ठवामाग्रकराभिमृष्टां गदां सदाऽहं शरणं प्रपद्ये ॥ ३ ॥
रक्षोसुराणां कठिनोग्रकण्ठच्छेदक्षरच्छोणितदिग्धधारम् । तं नन्दकं नाम हरेः प्रदीप्तं खड्गं सदाऽहं शरणं प्रपद्ये ॥
यज्ज्यानिनादश्रवणात्सुराणां चेतांसि निर्मुक्तभयानि सद्यः । भवन्ति दैत्याशनिबाणवर्षि शार्ङ्गं सदाऽहं शरणं प्रपद्ये ॥
इमं हरेः पञ्चमहायुधानां स्तवं पठेद्योऽनुदिनं प्रभाते । समस्तदुःखानि भयानि तस्य पापानि नश्यन्ति सुखानि सन्ति ॥
वने रणे शत्रुजलाग्निमध्ये यदृच्छयाऽऽपत्सु महाभयेषु । इदं पठन् स्तोत्रमनाकुलात्मा सुखीभवेत्तत्कृतसर्वरक्षः ॥ ७ ॥

॥ इति पञ्चायुधस्तोत्रं समाप्तम् ॥

श्रीवेदव्यासभट्टार्यपुत्ररत्नैः श्रीवेदाचार्यभट्टैरनुगृहीता

## ॥ क्षमाषोडशी ॥

यश्चक्रे रङ्गिणस्स्तोत्रं क्षमाषोडशिनामकम् । वेदव्यासस्य तनयं वेदाचार्यं तमाश्रये ॥

श्रीरङ्गेश ! यया करोषि जगतां सृष्टिप्रतिष्ठाक्षयान् अत्रामुत्र च भोगमक्षयसुखं मोक्षं च तत्तत्तृषाम् ।
त्वत्स्वातन्त्र्यमपोह्य कल्पितजगत्क्षेमाऽतिहृद्या स्वतः क्षान्तिस्ते करुणासखी विजयतां क्षेमाय सर्वात्मनाम् ॥ १ ॥

पापानां प्रथमोऽस्म्यहं भवति चेच्छास्त्रं प्रमाणं परं श्रीरङ्गेश ! न विद्यतेऽत्र विशयस्सन्त्येव ते साक्षिणः ।
पृष्ट्वा तानधुना मयोदितमिदं सत्येन गृह्येत चेत् सत्यं ह्युक्तमिति क्षमस्व भगवन् सर्वं तदस्मत्कृतम् ॥ २ ॥

त्वत्क्षान्तिः खलु रङ्गराज ! महती तस्याः पुनस्तोषणे पर्याप्तं न समस्तचेतनकृतं पापं ततो मामकम् ।
लक्ष्यं नेति न मोक्तुमर्हसि यतः कुत्रापि तुल्यो मया नान्यस्सिद्ध्यति पापकृत् तदधुना लब्धं तु नोपेक्ष्यताम् ॥

पुण्यं पापमिति द्वयं खलु तयोः पूर्वेण यत्साध्यते तत्त्वद्विस्मृतिकारकं तनुभृतां रङ्गेश ! संजायते ।
पाश्चात्यस्य तु यत्फलं तदिह ते दुःखच्छिदः स्मारकं तेनानेन कृतं तदेव शिशुनेत्यस्मत्कृतं क्षम्यताम् ॥ ४ ॥

पुण्यं यत्तव पूजनं भवति चेत् तत्कर्तुरिष्टे कृते तत्स्याद्रङ्गपते! कृतप्रतिकृतं सर्वेऽपि तत्कुर्वते ।
पापं चेदपराध एव भवतस्तत्कर्तृसंरक्षणे क्षान्तिस्ते निरुपाधिका निरुपमा लक्ष्येत तत् क्षम्यताम् ॥ ५ ॥

न द्वित्राणि कृतान्यनेन निरयैर्नालं पुनः कल्पितैः पापानामिति मत्कृते तदधिकान् कर्तुं प्रवृत्ते त्वयि ।
तेभ्योऽप्यभ्यधिकानि तान्यहमपि क्षुद्रः करोमि क्षणात् तद्यत्नस्तव निष्फलः खलु भवेत् तत्ते क्षमैव क्षमा ॥ ६ ॥

संभूयाखिलपातकैर्बहुविधं स्वं स्वं फलं दीयतां सर्वं सह्यमिदं मम त्वयि हरे! जाग्रत्यपि त्रातरि ।
दुःखाक्रान्तमवेक्ष्य मामिह जनो दुष्टाशयस्त्वद्गुणान् क्षान्त्यादीन् प्रति दुर्वचं यदि वदेत् सोढुं न तच्छक्यते ॥ ७॥

क्षान्तिर्नाम वरो गुणस्तव महाञ्छ्रीरङ्गपृथ्वीपते! सोऽयं सन्नपि सापराधनिवहाभावे न विद्योतते ।
तस्मान्नैकविधापराधकरणे निष्ठावता नित्यशः प्राप्नोत्येष मया प्रकाशमतुलं प्राप्स्याम्यहं च प्रथाम् ॥ ८ ॥

मत्पापक्षपणाय योजयसि चेद्घोरेण दण्डेन मां रङ्गाधीश्वर! केवलाघकरणाद्दुःखं मम स्यान्महत् ।
तद्द्रष्टुर्भवतोऽपि दुःखमतुलं घोरं दयालो! भवेत् तस्मात् तेऽपि सुखाय मत्कृतमिदं सर्वं त्वया क्षम्यताम् ॥ ९ ॥

देव! त्वां शरणं प्रपन्नमपि मां दुःखान्यनन्याश्रयं बाधन्ते यदि सर्वपापनिवहात् त्वां मोक्षयिष्याम्यहम् ।
इत्युक्तं तव वाक्यमर्थविधुरं जायेत यद्वा भवान् तत्राशक्त इति प्रथेत हि ततो मां रक्षतु त्वत्क्षमा ॥ १० ॥

न त्वं क्षाम्यसि चेदिदं मम कृतं नास्त्यत्र काचित्क्षतिः पूर्वं यत्समभूत् तदेव हि पुनर्जायेत तज्जायताम् ।
यद्वा स्यादधिकं च सोऽपि सुमहान् लाभोऽस्तु मे तादृशः स्वामिन्! दासजनस्तवायमधिकं स्वैरेण दूरीभवेत् ॥

सोऽहं क्षुद्रतया जुगुप्सिततमं दुष्कर्म नित्यं स्मरन् कुर्वन् काममशुद्धरीतिरभवं श्रीरङ्गपृथ्वीपते! ।
एतत्ते महतो विशुद्धमनसा स्मर्तुं न युक्तं खलु क्षान्त्या विस्मर तत्ततोऽहमसुखान्मुक्तो भवेयं सुखी ॥ १२ ॥

तत्तत्कर्मफलानुरूपमखिलो लोकस्त्वया सृज्यते तस्मात्कर्मवशंवदत्वमधिकं वक्तुं तवापि क्षमम् ।
श्रीरङ्गेश्वर! तत्प्रशान्तिविधये क्षान्त्या निराकृत्य मे सर्वं पातकमाशु दर्शय भवत्स्वातन्त्र्यमत्यङ्कुशम् ॥ १३ ॥

श्रीरङ्गेश! वचो मदीयमधुना व्यक्तं त्वया श्रूयतां पुण्यं तत्फलसङ्गमात्रविरहाद्भूयो न मां प्राप्नुयात् ।
पापं नैव तथा, फलं वितनुते शक्यं न तद्वारणं तत्क्षान्त्या तव शक्यमेव तदियं सद्यस्त्वया कल्प्यताम् ॥ १४ ॥

श्रीरङ्गेश्वर! पुण्यपापफलयोः स्वाधीनतां कुर्वतोः सर्वेषां सुखदुःखयोः स्वयमहं मग्नाशयो मामपि ।
स्मर्तुं न प्रभवामि किं पुनरहो त्वामन्तरन्तः स्थितं तत्ते त्वं क्षमया निरस्य कुरु मे त्वद्ध्यानयोग्यां दशाम् ॥ १५ ॥

अल्पं चेदनवेक्षणीयसरणावारोप्यतां मत्कृतं किञ्चिद्भूरि भवेदिदं यदि गुरून् संप्रेक्ष्य मे त्यज्यताम् ।
यद्वाऽनन्तमनन्तवैभवजुषो रङ्गक्षमावल्लभ! त्वत्क्षान्त्याः खलु लक्ष्यतामनुगुणामानीयतां तत्त्वया ॥ १६ ॥

संत्यक्तसर्वविहितक्रियमर्थकामश्रद्धालुमन्वहमनुष्ठितनिन्द्यकृत्यम् ।
अत्यन्तनास्तिकमनात्मगुणोपपन्नं मां रङ्गराज! परया कृपया क्षमस्व ॥ १७ ॥

श्रीमान् कूरान्ववाये कलशजलनिधौ कौस्तुभाभोऽवतीर्णः श्रीवेदव्यासभट्टारकतनयवरो रङ्गराजस्य हृद्यः ।
वेदाचार्याग्र्यनामा विदितगुणगणो रङ्गिणः स्तोत्रमेतत् चक्रे नित्याभिजप्यं सकलतनुभृतां सर्वपापापनुत्त्यै ॥ १८॥

॥ इति क्षमाषोडशी समाप्ता ॥



श्री श्रीवत्सचिह्नमिश्रादिभिरनुगृहीतमिति प्रथितं

## ॥ धाटीपञ्चकम् ॥



पाषण्डद्रुमषण्डदाववदहनश्चार्वाकशैलाशनिः बौद्धध्वान्तनिरासवासरपतिर्जैनेभकण्ठीरवः ।
मायावादिभुजङ्गभङ्गगरुडस्त्रैविद्यचूडामणिः श्रीरङ्गेशजयध्वजो विजयते रामानुजोऽयं मुनिः ॥ १ ॥

पाषण्डषण्डगिरिखण्डनवज्रदण्डाः प्रच्छन्नबौद्धमकरालयमन्थदण्डाः ।
वेदान्तसारसुखदर्शनदीपदण्डाः रामानुजस्य विलसन्ति मुनेस्त्रिदण्डाः ॥ २ ॥

चारित्रोद्धारदण्डं चतुरनयपथालङ्क्रियाकेतुदण्डं सद्विद्यादीपदण्डं सकलकलिकथासंहतेः कालदण्डम् ।
त्रय्यन्तालम्बदण्डं त्रिभुवनविजयच्छत्रसौवर्णदण्डं धत्ते रामानुजार्यः प्रतिकथकशिरोवज्रदण्डं त्रिदण्डम् ॥ ३ ॥

त्रय्या माङ्गल्यसूत्रं त्रियुगपदयुगारोहणालम्बसूत्रं सद्विद्यादीपसूत्रं सकलकलिकथासंहतेः कालसूत्रम् ।
प्रज्ञासूत्रं बुधानां प्रशमधनमनःपद्मिनीनालसूत्रं रक्षासूत्रं मुनीनां जयति यतिपतेर्वक्षसि ब्रह्मसूत्रम् ॥ ४ ॥

पाषण्डसागरमहाबडवामुखाग्निः श्रीरङ्गराजचरणाम्बुजमूलदासः ।
श्रीविष्णुलोकमणिमण्डपमार्गदायी रामानुजो विजयते यतिराजराजः ॥ ५ ॥

इति धाटीपञ्चकं समाप्तम् ॥



श्रीमदान्ध्रपूर्णैरनुगृहीतं

## ॥ रामानुजाष्टोत्तरशतनामस्तोत्रम् ॥



श्रीरामानुजयोगीन्द्रक्षीरकैङ्कर्यशालिने । नमो वटुकपूर्णाय महनीयगुणाब्धये ॥



रामानुजः पुष्कराक्षः यतीन्द्रः करुणाकरः । कान्तिमत्यात्मजः श्रीमान् लीलामानुषविग्रहः ॥ १ ॥
सर्वशास्त्रार्थतत्त्वज्ञः सर्वज्ञः सज्जनप्रियः । नारायणकृपापात्रं श्रीभूतपुरनायकः ॥ २ ॥
अनघो भक्तमन्दारः केशवानन्दवर्धनः । काञ्चीपूर्णप्रियसखः प्रणतार्तिविनाशनः ॥ ३ ॥
पुण्यसङ्कीर्तनः पुण्यः ब्रह्मराक्षसमोचकः । यादवापादितापार्थवृक्षच्छेदकुठारकः ॥ ४ ॥
अमोघो लक्ष्मणमुनिः शारदाशोकनाशनः । निरन्तरजनाज्ञाननिर्मोचनविचक्षणः ॥ ५ ॥
वेदान्तद्वयसारज्ञः वरदाम्बुदायकः । पराभिप्रायतत्त्वज्ञः यामुनाङ्गुलिमोचकः ॥ ६ ॥
देवराजकृपालब्धषड्वाक्यार्थमहोदधिः । पूर्णार्यलब्धसन्मन्त्रः शौरिपादाब्जषट्पदः ॥ ७ ॥
त्रिदण्डधारी ब्रह्मज्ञः ब्रह्मज्ञानपरायणः । रङ्गेशकैङ्कर्यरतः विभूतिद्वयनायकः ॥ ८ ॥
गोष्ठीपूर्णकृपालब्धमन्त्रराजप्रकाशकः । वररङ्गानुकम्पात्तद्राविडाम्नायपारगः ॥ ९ ॥

मालाधरार्यसुज्ञातद्राविडाम्नायतत्त्वधीः । चतुस्सप्ततिशिष्याढ्यः पञ्चाचार्यपदाश्रयः ॥ १० ॥

प्रपीतविषतीर्थाम्भःप्रकटीकृतवैभवः । प्रणतार्तिहराचार्यदत्तभिक्षैकभोजनः ॥ ११ ॥

पवित्रीकृतकूरेशः भागिनेयत्रिदण्डकः । कूरेशदाशरथ्यादिचरमार्थप्रदायकः ॥ १२ ॥

रङ्गेशवेङ्कटेशादिप्रकटीकृतवैभवः । देवराजार्चनरतः मूकमुक्तिप्रदायकः ॥ १३ ॥

यज्ञमूर्तिप्रतिष्ठाता मन्त्रदो धरणीधरः । वरदाचार्यसद्भक्तः यज्ञेशार्तिविनाशकः ॥ १४ ॥

अनन्ताभीष्टफलदः विठलेन्द्रप्रपूजितः । श्रीशैलपूर्णकरुणालब्धरामायणार्थकः ॥ १५ ॥

व्याससूत्रार्थतत्त्वज्ञः बोधायनमतानुगः । श्रीभाष्यादिमहाग्रन्थकारकः कलिनाशनः ॥ १६ ॥

अद्वैतमतविच्छेत्ता विशिष्टाद्वैतपारगः । कुरङ्गनगरीपूर्णमन्त्ररत्नोपदेशकः ॥ १७ ॥

विनाशिताखिलमतः शेषीकृतरमापतिः । पुत्रीकृतशठारातिः शठारात्यृणमोचकः ॥ १८ ॥

भाषादत्तहयग्रीवः भाष्यकारो महायशाः । पवित्रीकृतभूभागः कूर्मनाथप्रकाशकः ॥ १९ ॥

श्रीवेङ्कटाचलाधीशशङ्खचक्रप्रदायकः । श्रीवेङ्कटेशश्वशुरः श्रीरमासखदेशिकः ॥ २० ॥

कृपामात्रप्रसन्नार्यः गोपिकामोक्षदायकः । समीचीनार्यसच्छिष्यः सत्कृतो वैष्णवप्रियः ॥ २१ ॥

क्रिमिकण्ठनृपध्वंसी सर्वमन्त्रमहोदधिः । अङ्गीकृतान्ध्रपूर्णाख्यः सालग्रामप्रतिष्ठितः ॥ २२ ॥

श्रीभक्तग्रामपूर्णेशः विष्णुवर्धनरक्षकः । बौद्धध्वान्तसहस्रांशुः शेषरूपप्रदर्शकः ॥ २३ ॥

नगरीकृतवेदाद्रिः डिल्लीश्वरसमर्चितः । नारायणप्रतिष्ठाता संपत्पुत्रविमोचकः ॥ २४ ॥

सनत्कुमारजनकः साधुलोकशिखामणिः । सुप्रतिष्ठितगोविन्दराजः पूर्णमनोरथः ॥ २५ ॥

गोदाग्रजो दिग्विजेता गोदाभीष्टप्रपूरकः । सर्वसंशयविच्छेत्ता विष्णुलोकप्रदायकः ॥ २६ ॥

अव्याहतमहद्वर्त्मा यतिराजो जगद्गुरुः । एवं रामानुजार्यस्य नाम्नामष्टोत्तरं शतम् ॥
य: पठेच्छृणुयाद्वाऽपि सर्वान् कामानवाप्नुयात् ॥ २७ ॥

यदान्ध्रपूर्णेन महात्मनेदं स्तोत्रं कृतं सर्वजनावनाय । तज्जीवभूतं भुवि वैष्णवानां बभूव रामानुजमानसानाम् ॥

इति रामानुजाष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥

---

श्रीवादिकेसरि सुन्दरजामातृमुनिभिरनुगृहीतं

## ॥ नरसिंहाष्टकम् ॥

सुन्दरजामातृमुनेः प्रपद्ये चरणाम्बुजम् । संसारार्णवसंमग्नजन्तुसंतारपोतकम् ॥

---

श्रीमदकलङ्कपरिपूर्णशशिकोटिश्रीधरमनोहरसटापटलकान्त ! ।
पालय कृपालय ! भवाम्बुधिनिमग्न दैत्यवरकाल ! नरसिंह ! नरसिंह ! ॥ १ ॥

पादकमलावनतपातकिजनानां पातकदवानल! पतत्रिवरकेतो!
भावनपरायण! भवार्तिहरया मां पाहि कृपयैव नरसिंह! नरसिंह! ॥ २ ॥
तुङ्गनखपङ्क्तिदलितासुरवरासृक्पङ्कनवकुङ्कुमविपङ्किलमहोरः! ।
पण्डितनिधान! कमलालय! नमस्ते पङ्कजनिषण्ण! नरसिंह! नरसिंह! ॥ ३ ॥
मौलिषु विभूषणमिवामरवराणां योगिहृदयेषु च शिरस्सु निगमानाम् ।
राजदरविन्दरुचिरं पदयुगं ते धेहि मम मूर्ध्नि नरसिंह! नरसिंह! ॥ ४ ॥
वारिजविलोचन! मदन्तिमदशायां क्लेशविवशीकृतसमस्तकरणायाम् ।
एहि रमया सह शरण्य! विहगानां नाथमधिरुह्य नरसिंह! नरसिंह! ॥ ५ ॥
हाटककिरीटवरहारवनमालातारदशनामकरकुण्डलमणीन्द्रैः ।
भूषितमशेषनिलयं तव वपुर्मे चेतसि चकास्तु नरसिंह! नरसिंह! ॥ ६ ॥
इन्दुरविपावकविलोचन! रमायाः मन्दिर! महाभुजलसद्वररथाङ्ग! ।
सुन्दर! चिराय रमतां त्वयि मनो मे नन्दितसुरेश! नरसिंह! नरसिंह! ॥ ७ ॥
माधव! मुकुन्द! मधुसूदन! मुरारे! वामन! नृसिंह! शरणं भव नतानाम् ।
कामद! घृणिन्! निखिलकारण! नयेयं कालममरेश! नरसिंह! नरसिंह! ॥ ८ ॥
अष्टकमिदं सकलपातकभयघ्नं कामदमशेषदुरितामयरिपुघ्नम् ।
यः पठति सन्ततमशेषनिलयं ते गच्छति पदं स नरसिंह! नरसिंह! ॥ ९ ॥

इति नरसिंहाष्टकं समाप्तम् ॥

---

श्रीवरवरमुनिभिरनुगृहीतं

## ॥ मुक्तकमङ्गलम् ॥

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् । यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ।

लक्ष्मीचरणलाक्षाङ्कसाक्षिश्रीवत्सवक्षसे । क्षेमंकराय सर्वेषां श्रीरङ्गेशाय मङ्गलम् ॥ १ ॥
श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् । श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥ २ ॥
अस्तु श्रीस्तनकस्तूरीवासनावासितोरसे । श्रीहस्तिगिरिनाथाय देवराजाय मङ्गलम् ॥ ३ ॥
कमलाकुचकस्तूरीकर्दमाङ्कितवक्षसे । यादवाद्रिनिवासाय संपत्पुत्राय मङ्गलम् ॥ ४ ॥
श्रीनगर्यां महापुर्यां ताम्रपर्ण्युत्तरे तटे । श्रीतिन्त्रिणीमूलधाम्ने शठकोपाय मङ्गलम् ॥ ५ ॥
श्रीमत्यै विष्णुचित्तार्यमनोनन्दनहेतवे । नन्दनन्दनसुन्दर्यै गोदायै नित्यमङ्गलम् ॥ ६ ॥

श्रीमन्महाभूतपुरे श्रीमत्केशवयज्वनः । कान्तिमत्यां प्रसूताय यतिराजाय मङ्गलम् ॥ ७ ॥
मङ्गलाशासनपरैः मदाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ ८ ॥

इति मुक्तकमङ्गलम् समाप्तम् ॥

श्रीवरवरमुनिभिरनुगृहीतं

## ॥ देवराजमङ्गलम् ॥

यश्चक्रे देवराजस्य मङ्गलाशासनं मुदा । तं वन्दे रम्यजामातृमुनिं विशदवाग्वरम् ॥

मङ्गलं वेधसो वेदिमेदिनीगृहमेधिने । वरदाय दयाधाम्ने धीरोदाराय मङ्गलम् ॥ १ ॥
वाजिमेधे वपाहोमे धातुरुत्तरवेदितः । उदिताय हुतादग्नेः उदाराङ्गाय मङ्गलम् ॥ २ ॥
यजमानं विधिं वीक्ष्य स्मयमानमुखश्रिये । दयमानदृशे तस्मै देवराजाय मङ्गलम् ॥ ३ ॥
वारिदश्यामवपुषे विराजत्पीतवाससे । वारणाचलवासाय वारिजाक्षाय मङ्गलम् ॥ ४ ॥
अद्यापि सर्वभूतानां अभीष्टफलदायिने । प्रणतार्तिहरायास्तु प्रभवे मम मङ्गलम् ॥ ५ ॥
दिव्यावयवसौन्दर्यदिव्याभरणहेतये । दन्तावलगिरीशाय देवराजाय मङ्गलम् ॥ ६ ॥
पुरुषाय पुराणाय पुण्यकोटिनिवासिने । पुष्पितोदारकल्पद्रुकमनीयाय मङ्गलम् ॥ ७ ॥
काञ्चनाचलशृङ्गाग्रकालमेघानुसारिणे । सुपर्णांसावतंसाय सुरराजाय मङ्गलम् ॥ ८ ॥
भोगापवर्गयोरेकं वाञ्छद्भ्यो ददते द्वयम् । श्रीमद्वरदराजाय महोदाराय मङ्गलम् ॥ ९ ॥
मतङ्गजाद्रितुङ्गाग्रशृङ्गशृङ्गारवर्ष्मणे । महाकृपाय मद्रक्षादीक्षितायास्तु मङ्गलम् ॥ १० ॥
श्रीकाञ्चीपूर्णमिश्रेण प्रीत्या सर्वाभिभाषिणे । अतीतार्चाव्यवस्थाय हस्त्यद्रीशाय मङ्गलम् ॥ ११ ॥
अस्तु श्रीस्तनकस्तूरीवासनावासितोरसे । श्रीहस्तिगिरिनाथाय देवराजाय मङ्गलम् ॥ १२ ॥
मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १३ ॥

इति देवराजमङ्गलं समाप्तम् ॥

श्रीवरवरमुनिभिरनुगृहीता

## ॥ यतिराजविंशतिः ॥

यः स्तुतिं यतिपतिप्रसादिनीं व्याजहार यतिराजविंशतिम् । तं प्रपन्नजनचातकाम्बुदं नौमि सौम्यवरयोगिपुङ्गवम् ॥

श्रीमाधवाङ्घ्रिजलजद्वयनित्यसेवाप्रेमाविलाशयपराङ्कुशपादभक्तम् ।
कामादिदोषहरमात्मपदाश्रितानां रामानुजं यतिपतिं प्रणमामि मूर्ध्ना ॥ १ ॥

श्रीरङ्गराजचरणाम्बुजराजहंसं श्रीमत्पराङ्कुशपदाम्बुजभृङ्गराजम् ।
श्रीभट्टनाथपरकालमुखाब्जमित्रं श्रीवत्सचिह्नशरणं यतिराजमीडे ॥ २ ॥

वाचा यतीन्द्र! मनसा वपुषा च युष्मत्पादारविन्दयुगलं भजतां गुरूणाम् ।
कूराधिनाथकुरुकेशमुखाद्यपुंसां पादानुचिन्तनपरस्सततं भवेयम् ॥ ३ ॥

नित्यं यतीन्द्र! तव दिव्यवपुस्स्मृतौ मे सक्तं मनो भवतु वाग्गुणकीर्तनेऽसौ ।
कृत्यं च दास्यकरणं तु करद्वयस्य वृत्त्यन्तरेऽस्तु विमुखं करणत्रयं च ॥ ४ ॥

अष्टाक्षराख्यमनुराजपदत्रयार्थनिष्ठां ममात्र वितराद्य यतीन्द्र नाथ! ।
शिष्टाग्रगण्यजनसेव्यभवत्पदाब्जे हृष्टाऽस्तु नित्यमनुभूय ममास्य बुद्धिः ॥ ५ ॥

अल्पाऽपि मे न भवदीयपदाब्जभक्तिश्शब्दादिभोगरुचिरन्वहमेधते हा ।
मत्पापमेव हि निदानममुष्य नान्यत्तद्वारयार्य यतिराज! दयैकसिन्धो! ॥ ६ ॥

वृत्त्या पशुर्नरवपुस्त्वहमीदृशोऽपि श्रुत्यादिसिद्धनिखिलात्मगुणाश्रयोऽयम् ।
इत्यादरेण कृतिनोऽपि मिथः प्रवक्तुमद्यापि वञ्चनपरोऽत्र यतीन्द्र! वर्ते ॥ ७ ॥

दुःखावहोऽहमनिशं तव दुष्टचेष्टश्शब्दादिभोगनिरतश्शरणागताख्यः ।
त्वत्पादभक्त इव शिष्टजनौघमध्ये मिथ्या चरामि यतिराज ततोऽस्मि मूर्खः ॥ ८ ॥

नित्यं त्वहं परिभवामि गुरुं च मन्त्रं तद्देवतामपि न किञ्चिदहो बिभेमि ।
इत्थं शठोऽप्यशठवद्भवदीयसङ्घे धृष्टश्चरामि यतिराज ततोऽस्मि मूर्खः ॥ ९ ॥

हा हन्तहन्त मनसा क्रियया च वाचा योऽहं चरामि सततं त्रिविधापचारान् ।
सोऽहं तवाप्रियकरः प्रियकृद्वदेव कालं नयामि यतिराज! ततोऽस्मि मूर्खः ॥ १० ॥

पापे कृते यदि भवन्ति भयानुतापलज्जाः पुनः करणमस्य कथं घटेत ।
मोहेन मे न भवतीह भयादिलेशस्तस्मात्पुनःपुनरघं यतिराज! कुर्वे ॥ ११ ॥

अन्तर्बहिस्सकलवस्तुषु सन्तमीशमन्धः पुरस्स्थितमिवाहमवीक्षमाणः ।
कन्दर्पवश्यहृदयस्सततं भवामि हन्त त्वदग्रगमनस्य यतीन्द्र! नार्हः ॥ १२ ॥

तापत्रयीजनितदुःखनिपातिनोऽपि देहस्थितौ मम रुचिस्तु न तन्निवृत्तौ ।
एतस्य कारणमहो मम पापमेव नाथ! त्वमेव हर तद्यतिराज! शीघ्रम् ॥ १३ ॥

वाचामगोचरमहागुणदेशिकाग्र्यकूराधिनाथकथिताखिलनैच्यपात्रम् ।
एषोऽहमेव न पुनर्जगतीदृशस्तद्रामानुजार्य करुणैव तु मद्गतिस्ते ॥ १४ ॥

शुद्धात्मयामुनगुरूत्तमकूरनाथभट्टाख्यदेशिकवरोक्तसमस्तनैच्यम् ।
अद्यास्त्यसङ्कुचितमेव मयीह लोके तस्माद्यतीन्द्र! करुणैव तु मद्गतिस्ते ॥ १५ ॥

शब्दादिभोगविषया रुचिरस्मदीया नष्टा भवत्विह भवद्दयया यतीन्द्र! ।
त्वद्दासदासगणनाचरमावधौ यस्तद्दासतैकरसताऽविरता ममास्तु ॥ १६ ॥
श्रुत्यग्रवेद्यनिजदिव्यगुणस्वरूपः प्रत्यक्षतामुपगतस्त्विह रङ्गराजः ।
वश्यस्सदा भवति ते यतिराज! तस्माच्छक्तस्स्वकीयजनपापविमोचने त्वम् ॥ १७ ॥
कालत्रयेऽपि करणत्रयनिर्मितातिपापक्रियस्य शरणं भगवत्क्षमैव ।
सा च त्वयैव कमलारमणेऽर्थिता यत्क्षेमस्स एव हि यतीन्द्र भवच्छ्रितानाम् ॥ १८ ॥
श्रीमन्यतीन्द्र! तव दिव्यपदाब्जसेवां श्रीशैलनाथकरुणापरिणामदत्ताम् ।
तामन्वहं मम विवर्धय नाथ! तस्याः कामं विरुद्धमखिलं च निवर्तय त्वम् ॥ १९ ॥
विज्ञापनं यदिदमद्य तु मामकीनमङ्गीकुरुष्व यतिराज दयाम्बुराशे! ।
अज्ञोऽयमात्मगुणलेशविवर्जितश्च तस्मादनन्यशरणो भवतीति मत्वा ॥ २० ॥

इति यतिकुलधुर्यमेधमानैः श्रुतिमधुरैरुदितैः प्रहर्षयन्तम्। वरवरमुनिमेव चिन्तयन्ती मतिरियमेति निरत्ययं प्रसादम्॥

इति यतिराजविंशतिस्समाप्ता ॥

श्रीदेवराजगुरुभिरनुगृहीता

## ॥ पूर्वदिनचर्या ॥

सौम्यजामातृयोगीन्द्रचरणाम्बुजषट्पदम्। देवराजगुरुं वन्दे दिव्यज्ञानप्रदं शुभम् ॥

अङ्के कवेरकन्यायास्तुङ्गे भुवनमङ्गले। रङ्गे धाम्नि सुखासीनं वन्दे वरवरं मुनिम् ॥ १ ॥
मयि प्रविशति श्रीमन्मन्दिरं रङ्गशायिनः। पत्युः पदाम्बुजं द्रष्टुमायान्तमविदूरतः ॥ २ ॥
सुधानिधिमिव स्वैरस्वीकृतोदग्रविग्रहम्। प्रसन्नार्कप्रतीकाशप्रकाशपरिवेष्टितम् ॥ ३ ॥
पार्श्वतः पाणिपद्माभ्यां परिगृह्य भवत्प्रियौ। विन्यस्यन्तं शनैरङ्घ्री मृदुलौ मेदिनीतले ॥ ४ ॥
आम्लानकोमलाकारमाताम्रविमलाम्बरम्। आपीनविपुलोरस्कमाजानुभुजभूषणम् ॥ ५ ॥
मृणालतन्तुसन्तानसंस्थानधवलत्विषा। शोभितं यज्ञसूत्रेण नाभिबिम्बसनाभिना ॥ ६ ॥
अम्भोजबीजमालाभिरभिजातभुजान्तरम्। ऊर्ध्वपुण्ड्रैरुपश्लिष्टमुचितस्थानलक्षणैः ॥ ७ ॥
काश्मीरकेसरस्तोमकडारस्निग्धरोचिषा। कौशेयेन समिन्धानं स्कन्धमूलावलम्बिना ॥ ८ ॥
मन्त्ररत्नानुसन्धानसन्ततस्फुरिताधरम्। तदर्थतत्त्वनिध्यानसन्नद्धपुलकोद्गमम् ॥ ९ ॥
स्मयमानमुखाम्भोजं दयमानदृगञ्चलम्। मयि प्रसादप्रवणं मधुरोदारभाषणम् ॥ १० ॥
आत्मलाभात्परं किञ्चिदन्यन्नास्तीति निश्चयात्। अङ्गीकर्तुमिव प्राप्तमकिञ्चनमिमं जनम् ॥ ११ ॥
भवन्तमेव नीरन्ध्रं पश्यन्वश्येन चेतसा। मुने! वरवर! स्वामिन्मुहुस्त्वामेव कीर्तयन् ॥ १२ ॥

त्वदन्यविषयस्पर्शविमुखैरखिलेन्द्रियैः । भवेयं भवदुःखानामसह्यानामनास्पदम् ॥ १३ ॥
परेद्युः पश्चिमे यामे यामिन्यास्समुपस्थिते । प्रबुध्य शरणं गत्वा परां गुरुपरम्पराम् ॥ १४ ॥
ध्यात्वा रहस्यत्रितयं तत्त्वयाथात्म्यदर्पणम् । परव्यूहादिकान् पत्युः प्रकारान् प्रणिधाय च ॥ १५ ॥
ततः प्रत्युषसि स्नात्वा कृत्वा पौर्वाह्णिकीः क्रियाः । यतीन्द्रचरणद्वन्द्वप्रवणेनैव चेतसा ॥ १६ ॥
अथ रङ्गनिधिं सम्यगभिगम्य निजं प्रभुम् । श्रीनिधानं शनैस्तस्य शोधयित्वा पदद्वयम् ॥ १७ ॥
ततस्तत्सन्निधिस्तम्भमूलभूतलभूषणम् । प्राङ्मुखं सुखमासीनं प्रसादमधुरस्मितम् ॥ १८ ॥
भृत्यैः प्रियहितैकाग्रैः प्रेमपूर्वमुपासितम् । तत्प्रार्थनानुसारेण संस्कारान् संविधाय मे ॥ १९ ॥
अनुकम्पापरीवाहैरभिषेचनपूर्वकम् । दिव्यं पदद्वयं दत्त्वा दीर्घं प्रणमतो मम ॥ २० ॥
साक्षात्फलैकलक्ष्यत्वप्रतिपत्तिपवित्रितम् । मन्त्ररत्नं प्रयच्छन्तं वन्दे वरवरं मुनिम् ॥ २१ ॥
ततस्सार्धं विनिर्गत्य भृत्यैर्नित्यानपायिभिः । श्रीरङ्गमङ्गलं द्रष्टुं पुरुषं भुजगेशयम् ॥ २२ ॥
महति श्रीमति द्वारे गोपुरं चतुराननम् । प्रणिपत्य शनैरन्तः प्रविशन्तं भजामि तम् ॥ २३ ॥

देवी गोदा यतिपतिशठद्वेषिणौ रङ्गशृङ्गं सेनानाथो विहगवृषभश्श्रीनिधिस्सिन्धुकन्या ।
भूमानीलागुरुजनवृतः पूरुषश्चेत्यमीषामग्रे नित्यं वरवरमुनेरङ्घ्रियुग्मं प्रपद्ये ॥ २४ ॥

मङ्गलाशासनं कृत्वा तत्रतत्र यथोचितम् । धाम्नस्तस्माद्विनिष्क्रम्य प्रविश्य स्वं निकेतनम् ॥ २५ ॥
अथ श्रीशैलनाथार्यनाम्नि श्रीमति मण्डपे । तदङ्घ्रिपङ्कजद्वन्द्वच्छायामध्यनिवासिनाम् ॥ २६ ॥
तत्त्वं दिव्यप्रबन्धानां सारं संसारवैरिणाम् । सरसं सरहस्यानां व्याचक्षाणं नमामि तम् ॥ २७ ॥
ततः स्वचरणाम्भोजस्पर्शसम्पन्नसौरभैः । पावनैरर्थिनस्तीर्थैर्भावयन्तं भजामि तम् ॥ २८ ॥
आराध्य श्रीनिधिं पश्चादनुयागं विधाय च । प्रसादपात्रं मां कृत्वा पश्यन्तं भावयामि तम् ॥ २९ ॥
ततश्चेतस्समाधाय पुरुषे पुष्करेक्षणे । उत्तंसितकरद्वन्द्वमुपविष्टमुपह्वरे ॥ ३० ॥

अब्जासनस्थमवदातसुजातमूर्तिमामीलिताक्षमनुसंहितमन्त्ररत्नम् ।
आनम्रमौलिभिरुपासितमन्तरङ्गैर्नित्यं मुनिं वरवरं निभृतो भजामि ॥ ३१ ॥

ततश्शुभाश्रये तस्मिन्निमग्नं निभृतं मनः । यतीन्द्रप्रवणं कर्तुं यतमानं नमामि तम् ॥ ३२ ॥

इति पूर्वदिनचर्या समाप्ता ॥

श्रीदेवराजगुरुभिरनुगृहीता

## ॥ उत्तरदिनचर्या ॥

अथ गोष्ठीं गरिष्ठानामधिष्ठाय सुमेधसाम् । वाक्यालङ्कृतिवाक्यानां व्याख्यातारं नमामि तम् ॥ १ ॥

सायन्तनं ततः कृत्वा सम्यगाराधनं हरेः। स्वैरालापैः शुभैश्श्रोतॄन्नन्दयन्तं नमामि तम् ॥ २ ॥

ततः कनकपर्यङ्के तरुणद्युमणिद्युतौ। विशालविमलश्लक्ष्णतुङ्गतूलासनोज्ज्वले ॥ ३ ॥

समग्रसौरभोद्गारनिरन्तरदिगन्तरे। सोपधाने सुखासीनं सुकुमारे वरासने ॥ ४ ॥

उन्मीलत्पद्मगर्भद्युतितलमुपरि क्षीरसङ्घातगौरं राकाचन्द्रप्रकाशप्रचुरनखमणिद्योतविद्योतमानम्।
अङ्गुल्यग्रेषु किञ्चिन्नतमतिमृदुलं रम्यजामातृयोगी दिव्यं तत्पादयुग्मं दिशतु शिरसि मे देशिकेन्द्रो दयालुः ॥

त्वं मे बन्धुस्त्वमसि जनकस्त्वं सखा देशिकस्त्वं विद्या वृत्तं सुकृतमतुलं वित्तमप्युत्तमं त्वम्।
आत्मा शेषी भवसि भगवन्नान्तरश्शासिता त्वं यद्वा सर्वं वरवरमुने! यद्यदात्मानुरूपम् ॥ ६ ॥

अग्रे पश्चादुपरि परितो भूतलं पार्श्वतो मे मौलौ वक्त्रे वपुषि सकले मानसाम्भोरुहे च।
दर्शंदर्शं वरवरमुने दिव्यमङ्घ्रिद्वयं ते नित्यं मज्जन्नमृतजलधौ निस्तरेयं भवाब्धिम् ॥ ७ ॥

कर्माधीने वपुषि कुमतिः कल्पयन्नात्मभावं दुःखे मग्नः किमिति सुचिरं दूयते जन्तुरेषः।
सर्वं त्यक्त्वा वरवरमुने! सम्प्रति त्वत्प्रसादाद्दिव्यं प्राप्तुं तव पदयुगं देहि मे सुप्रभातम् ॥ ८ ॥

या या वृत्तिर्मनसि मम सा जायतां संस्मृतिस्ते यो यो जल्पस्स भवतु विभो! नामसङ्कीर्तनं ते।
या या चेष्टा वपुषि भगवन्! सा भवेद्वन्दनं ते सर्वं भूयाद्वरवरमुने! सम्यगाराधनं ते ॥ ९ ॥

अपगतमदमानैरन्तिमोपायनिष्ठैरधिगतपरमार्थैरर्थकामानपेक्षैः।
निखिलजनसुहृद्भिर्निर्जितक्रोधलोभैर्वरवरमुनिभृत्यैरस्तु मे नित्ययोगः ॥ १० ॥

इति स्तुतिनिबन्धेन सूचितस्वमनीषितान्। भृत्यान् प्रेमार्द्रया दृष्ट्या सिञ्चन्तं चिन्तयामि तम् ॥ ११ ॥

अथ भृत्याननुज्ञाप्य कृत्वा चेतश्शुभाश्रये। शयनीयं परिष्कृत्य शयानं संस्मरामि तम् ॥ १२ ॥

दिनचर्यामिमां दिव्यां रम्यजामातृयोगिनः। भक्त्या नित्यमनुध्यायन् प्राप्नोति परमं पदम् ॥ १३ ॥

इति उत्तरदिनचर्या समाप्ता ॥

## ॥ श्रीवरवरमुनिविषयकमुक्तकम् ॥

प्रपद्ये पदपद्मानि परमप्रेमसम्पदाम्। सौम्यजामातृयोगीन्द्रचरणैकजुषां सताम् ॥ १ ॥

संपत्स्वरूपानुगुणैव यस्मिन् सर्वोत्तरो यत्र मनःप्रसादः। सद्भिस्समं देव तमेव देशं प्राप्तुं प्रपद्ये भवदङ्घ्रिमूलम् ॥२॥

यन्मूलमाश्वयुजमास्यवतारमूलं कान्तोपयन्तृयमिनः करुणैकसिन्धोः।
आसीदसत्सु गणितस्य ममापि सत्तामूलं तदेव जगदभ्युदयैकमूलम् ॥ ३ ॥

श्रीमद्रङ्गं जयतु परमं धाम तेजोनिधानं भूमा तस्मिन् भवतु कुशली कोऽपि भूमासहायः।
दिव्यं तस्मै दिशतु विभवं देशिको देशिकानां काले काले वरवरमुनिः कल्पयन्मङ्गलानि ॥ ४ ॥

न चेद्रामानुजेत्येषा चतुरा चतुरक्षरी। कामवस्थां प्रपद्यन्ते जन्तवो हन्त मादृशः ॥ ५ ॥
पुण्याम्भोजविकासाय पापध्वान्तक्षयाय च। श्रीमानाविरभूद्भूमौ रामानुजदिवाकरः ॥ ६ ॥
तृणीकृतविरिञ्चादिनिरङ्कुशविभूतयः। रामानुजपदाम्भोजसमाश्रयणशालिनः ॥ ७ ॥

श्रीदेवराजगुरुभिरनुगृहीतं

## ॥ श्रीशैलेशाष्टकम् ॥

सौम्यजामातृयोगीन्द्रचरणाम्बुजषट्पदम्। देवराजगुरुं वन्दे दिव्यज्ञानप्रदं शुभम् ॥

शेषः श्रीमानजनि हि पुरा सौम्यजामातृयोगी भोगी भूतस्तदनु भगवान् राघवस्यानुजन्मा।
भूत्वा भव्यो वरवरमुनिर्भूयसा भासमानः रक्षत्वस्मान् रघुकुलपतेराश्रितो भद्रपीठम् ॥ १ ॥

श्रोतुं द्राविडवेदभूरिविवृतिं सौम्योपयन्तुर्मुनेः उत्कण्ठाऽस्ति ममैनमानयत तं तार्क्ष्याश्रयं मण्डपम्।
आविश्यार्चकमुचिवानिति मुदा निश्शेषलोकार्चितः रङ्गी वत्सरमेकमेवमशृणोत् व्यक्तं यथोक्तक्रमात् ॥ २ ॥

श्रीभूम्यां रङ्गनाथे शठजिदुपनिषद्व्याक्रियां श्रोतुकामे शेषस्सन्तोषयिष्यन् वरवरमुनितां प्राप्य यो वर्ततेऽग्रे।
काषायश्रीतुलस्यम्बुजमणिसुशिखायज्ञसूत्रत्रिदण्डैः भान्तं शुभ्रोर्ध्वपुण्ड्रं स्मर हृदय सदा कोशमुद्राङ्कहस्तम् ॥

कृपया परया स रङ्गराट् महिमानं महतां प्रकाशयन्। लुलुभे स्वयमेव चेतसा वरयोगिप्रवरस्य शिष्यताम् ॥४॥

समाप्तौ ग्रन्थस्य प्रथितविविधोपायनचये परं सज्जीभूते वरवरमुनेरङ्घ्रिसविधे।
हठाद्बालः कश्चित् कुत इति निरस्तोऽप्युपगतः जगौ रङ्गेशाख्यः परिणतचतुर्हायन इदम् ॥ ५ ॥

श्रीमान् रङ्गेश्वरो यद्वकुलधरवचोभाष्यसारार्थजातं श्रुत्वा सौम्योपयन्ता मुनिवरचरणे च्छात्रभावं प्रपन्नः।
श्रीशैलेशेति पद्यं खगपतिनिलये मण्डपे तत्समाप्तौ उक्त्वाऽध्येतव्यमेतन्निखिलनिजगृहेष्वादिशत्तत्तदादौ ॥६॥

वेदादौ पूर्वमुक्त्वा हरिरिति सुजनो वक्ति पश्चाद्यथोमित्येवं वक्तव्यमेतद्वकुलधरवचोऽनुश्रवारम्भकाले।
श्रीशैलेशेति पद्यं प्रथममथ सतां संप्रदायैकनिष्ठैः लक्ष्मीनाथेति पद्यं स्वयमिति भगवानादिशद्रङ्गनाथः ॥ ७ ॥

यद्वद्वक्तुं न युक्तं प्रणवहरिपदाभ्यन्तरेऽन्यत्पदं तत् कृष्णेत्येतत्कदाचिन्मुनिशतवचनैर्वैदिकैर्ब्रह्मनिष्ठैः।
तद्वद्रङ्गेशभक्तैः शमदमनियतैः साधुभिस्तत्त्वविद्भिः वक्तुं युक्तं न मध्ये सपदि नियतयोरेतयोः पद्यमन्यत् ॥

शठरिपुरेक एव कमलापतिदिव्यकविः मधुरकविर्यथा च शठजिन्मुनिमुख्यकविः।
यतिकुलपुङ्गवस्य भुवि रङ्गसुधाकविराट् वरवरयोगिनो वरदराजकविश्च तथा ॥ ९ ॥

इति श्रीशैलेशाष्टकं समाप्तम् ॥

श्रीदेवराजगुरुभिरनुगृहीतं

# ॥ श्रीवरवरमुनिशतकम् ॥

सौम्यजामातृयोगीन्द्रचरणाम्बुजषट्पदम् । देवराजगुरुं वन्दे दिव्यज्ञानप्रदं शुभम् ॥

वरवरमुनिवर्यपादुरत्नं वरदगुरुं गुरुमाश्रये गुरूणाम् । उपनिषदुपगीतमर्थतत्त्वं तदिह यदीयवशंवदं समिन्धे ॥ १ ॥

गुणमणिनिधये! नमो नमस्ते गुरुकुलधुर्य! नमो नमो नमस्ते । वरवरमुनये नमो नमस्ते यतिवरतत्त्वविदे नमो नमस्ते॥

कुरु मयि विमलं दृगञ्चलं ते कुशलनिदान! दयानिधे! नमस्ते ।
निशिचरपरिपन्थिनित्ययुक्ते निमिकुलमङ्गलदीपिके नमस्ते ॥ ३ ॥

रविसुतसुहृदे नमो नमस्ते रघुकुलरत्न! नमो नमो नमस्ते ।
दशमुखमकुटच्छिदे नमस्ते दशरथनन्दन! सन्ततं नमस्ते ॥ ४ ॥

यदि पुनरभिधेयमद्वितीयं कृतिभिरतः परमीक्ष्यते न किञ्चित् ।
विजहति न हि जातु शुक्तिमुक्तं विशदशशिद्युतिमौक्तिकं विदग्धाः ॥ ५ ॥

देव! प्रसीद मयि दिव्यगुणैकसिन्धो! दृष्ट्या दयामृतदुहा सकृदीक्षितुं माम् ।
नैतेन कृत्यमसतेति नचिन्तयित्वा नारायणं गुरुवरं वरदं विदन्मे ॥ ६ ॥

श्रीमद्रङ्गं जयतु परमं धाम तेजोनिधानं भूमा तस्मिन्भवतु कुशली कोऽपि भूमासहायः ।
दिव्यं तस्मै दिशतु विभवं देशिको देशिकानां कालेकाले वरवरमुनिः कल्पयन्मङ्गलानि ॥ ७ ॥

तस्यै नित्यं प्रदिशति दिशे दक्षिणस्यै नमस्यां यस्यामाविर्भवति जगतां जीवनी सह्यकन्या ।
पुण्यैर्यस्याः क्षितितलजुषं पूरुषं रङ्गभूषां पश्यन् धन्यो वरवरमुनिः पालयन् वर्तते नः ॥ ८ ॥

आशापाशैरवधिविधुरैः स्वैरमाकृष्यमाणं दूराद्दूरं पुनरपि न मे दूयतामेव चेतः ।
अन्तः कृत्वा वरवरमुने! नित्यमङ्घ्रिद्वयं ते धाराकारस्मरणसुभगं निश्चलीभूय तत्र ॥ ९ ॥

त्वं मे बन्धुस्त्वमसि जनकस्त्वं सखा देशिकस्त्वं विद्या वृत्तं सुकृतमतुलं वित्तमप्युत्तमं त्वम् ।
आत्मा शेषी भवसि भगवन्नान्तरश्शासिता त्वं यद्वा सर्वं वरवरमुने! यद्यदात्मानुरूपम् ॥ १० ॥

आम्नायेषु स्मृतिभिरमितैः सेतिहासैः पुराणैः दृश्यं यत्नैर्यदिह विदुषां देशिकानां प्रसादात् ।
स्वैरालापैस्सुलभयसि तत्पञ्चमोपायतत्त्वं दर्शंदर्शं वरवरमुने! दैन्यमस्मद्विधानाम् ॥ ११ ॥

सत्संबन्धो भवति हितमित्यात्मनैवोपदिष्टं शिष्टाचारं द्रढयितुमिह श्रीसखो रङ्गधुर्यः ।
द्वारं प्राप्य प्रथितविभवो देवदेवस्त्वदीयं दृष्ट्वैव त्वां वरवरमुने! दृश्यते पूर्णकामः ॥ १२ ॥

सोऽयं भूयः स्वयमुपगतो देशिकैस्संसदं ते श्रुत्वा गूढं शठरिपुगिरामर्थतत्त्वं त्वदुक्तम् ।
आगोपालं प्रथयतितरामद्वितीयं त्वदीयं वाचां दूरं वरवरमुने! वैभवं शेषशायी ॥ १३ ॥

सिद्धोपायस्त्वमिह सुलभो लम्भयन् पूरुषार्थान् अज्ञातांश्च प्रथयसि पुनर्यत्ततो देशिकस्त्वम् ।
देवी लक्ष्मीर्भवसि दयया वत्सलत्वेन च त्वं कोऽसौ यस्त्वां वरवरमुने! मन्यते नात्मनीनम् ॥ १४ ॥

नित्यं पत्युः परिचरणतो वर्णतो निर्मलत्वात् वृत्त्या वाचां विबुधसरितश्चातुरीमुद्गिरन्त्या ।
शेषः श्रीमानिति रघुपतेरन्तरेणापि वार्णीं को नाम त्वां वरवरमुने! कोविदो नावगन्तुम् ॥ १५ ॥

सत्यं सत्यं पुनरिति पुरा सारविद्भिर्यदुक्तं ब्रूमः श्रोत्रैः शृणुत सुधियो मत्सरं वर्जयित्वा ।
तत्त्वं विष्णुः परमनुपमं तत्पदं प्राप्यमेवं तत्संप्राप्तौ वरवरमुनिर्देशिको दीर्घदर्शी ॥ १६ ॥

लक्ष्यं यस्ते भवति भगवंश्चेनसश्चक्षुषो वा तुभ्यं द्रुह्यन्त्यपि कुमतयो ये वृथा मत्सरेण ।
मुक्तिं गच्छेन्मुषितकलुषो मोहमुद्धूय सोऽयं नानाभूतान् वरवरमुने! नारकान् प्राप्नुयुस्ते ॥ १७ ॥

स्वप्नेऽपि त्वत्पदकमलयोरञ्जलिं कल्पयित्वा श्रुत्वा यद्वा सकृदपि विभो! नामधेयं त्वदीयम् ।
निष्प्रत्यूहं वरवरमुने! मानवः कर्मबन्धान् भस्मीकृत्य प्रविशति परं प्राप्यमेव प्रदेशम् ॥ १८ ॥

यस्मिन् किञ्चिद्विधिरपि यथा वीक्षितुं न क्षमः स्यात् वक्तुं शक्तः क इह भगवन् वैभवं तत् त्वदीयम् ।
यस्सर्वज्ञस्स खलु भगवानीक्षते तत्समग्रं तस्यापि त्वं वरवरमुने! मन्यसे तत्त्वमेकः ॥ १९ ॥

कालोऽनन्तः कमलजनुषो न व्यतीताः कियन्तः तिर्यङ्मर्त्यस्तृणवनलताः प्रस्तरो वाऽप्यभूवम् ।
इत्थं व्यर्थैर्जनिमृतिशतैरेनसामेव पात्रं दिष्ट्या सोऽहं वरवरमुने! दृष्टिगम्यस्तवासम् ॥ २० ॥

मुक्त्वैव त्वां वरवरमुने! संपदां मूलकन्दं क्षेमं किंचिन्न खलु सुलभं केशवैकान्त्यभाजाम् ।
दृष्टो दैवात् तव पुनरनुक्रोशकोशैरपाङ्गैः निर्मर्यादः पशुरपि भृशं नीयते निर्मलत्वम् ॥ २१ ॥

मर्त्यं कंचिद्वरवरमुने! मानहीनः प्रशंसन् पादौ तस्य प्रपदनपरः प्रत्यहं सेवमानः ।
तच्छेषत्वं निरयमपि यः श्लाघ्यमित्येव भुङ्क्ते सोऽयं प्राप्तः कथमिव परं त्वत्पदैकान्त्यवृत्तम् ॥ २२ ॥

नित्यानां यः प्रथमगणनां नीयसे शास्त्रमुख्यैः कृत्याकृत्या भवसि कमलाभर्तुरेकान्तमित्रम् ।
देवः स्वामी स्वयमिह भवन् सौम्यजामातृयोगी भोगीश! त्वद्विमुखमपि मां भूयसा पश्यसि त्वम् ॥ २३ ॥

अर्थौदार्यादपि च वचसामञ्जसा सन्निवेशात् आविर्भावैरमलमतिभिर्नित्यमाराधनीयम् ।
आशासानैर्वरवरमुने! नित्यमुक्तैरलभ्यं मर्त्यो लब्धुं प्रभवति कथं मद्विधः श्रीमुखं ते ॥ २४ ॥

सारासारप्रमितिरहितस्सर्वथा शासनं ते सद्यः श्रीमन्! कपिकरकृतां मालिकामेव कुर्याम् ।
नो चेदेतद्वरवरमुने! दूरदूरं श्रुतीनां मौलौ कुर्यात् पुरुषवृषभो मैथिलीभागधेयम् ॥ २५ ॥

लक्ष्यं त्यक्त्वा यदपि विफलो जायते रामबाणः वाणी दिव्या वरवरमुने! जातु नैव त्वदीया ।
सोऽयं सर्वं मदभिलषितं वर्षति श्रीमुखाब्दः तस्मै नित्यं तदिह परमं धाम कस्माद्दुरापम् ॥ २६ ॥

प्रेमस्थानं वरवरमुने! सन्तु सन्तश्शतं ते तुल्यः को वा वरदगुरुणा तेषु नारायणेन ।
सानुक्रोशस्स तु मयि दृढं सर्वदोषास्पदेऽस्मिन् मामेवं ते मनसि कुरुते मत्समः को हि लोके ॥ २७ ॥

भक्त्युत्कर्षं दिशति यदि मे पादपद्मे त्वदीये तस्मादस्मै भवति वरदस्सार्थनामा गुरुर्मे ।
यद्वा तस्मै वरवरमुने! यद्यहं प्रेमयुक्तः धन्यस्त्वं मामनुभजसि तत् किं नु मन्ये यदन्यैः ॥ २८ ॥

यत्संबन्धाद्भवति सुलभं यस्य कस्यापि लोके मुक्तैर्नित्यैरपि दुरधिगं दैवतं मुक्तिमूलम् ।
तं त्वामेवं वदति वरदे सौहृदं मे यदि स्यात् तस्यैव स्याद्वरवरमुने! सन्निधौ नित्यवासः ॥ २९ ॥

सर्वावस्थासदृशविविधाशेषगस्त्वत्प्रियाणां त्यक्त्वा भर्तुस्तदपि परमं धाम तत्प्रीतिहेतोः ।
मग्नानग्नौ वरवरमुने! मादृशानुन्निनीषन् मर्त्यावासो भवसि भगवन् मङ्गलं रङ्गधाम्नः ॥ ३० ॥

प्रत्यूषार्कद्युतिपरिचयस्मेरपद्माभिताम्रं पश्येयं तद्वरवरमुने! पादयुग्मं त्वदीयम् ।
पाथोबिन्दुः परमणुरपि स्पर्शवेधी यदीयः भावेभावे विषयमुषितान् पावयत्येव लोकान् ॥ ३१ ॥

नित्ये लोके निवसति पुनः श्रीमति क्ष्मागतानां दूरीभावः प्रभवति पुरा दुष्कृतैर्दुर्विपाकैः ।
संप्रत्येवं सकलसुलभो यद्यपि त्वं दयाब्धे! मामेवैकं वरवरमुने! मन्यसे वर्जनीयम् ॥ ३२ ॥

त्वत्पादाब्जप्रणयविधुरो दूरगस्त्वत्प्रियाणां त्वत्सम्बन्धस्मरणविमुखो वीतरागस्त्वदुक्तौ ।
त्वत्कैङ्कर्यत्वदुपसदनत्वत्प्रणामानभिज्ञः दूये दूरं वरवरमुने! दोषलक्षैकलक्ष्यम् ॥ ३३ ॥

पादुर्भूतप्रचुरमतयो ये परब्रह्मसाम्यात् पश्यन्तस्तत्पदमनुपमं ये पुनश्शुद्धसत्त्वाः ।
सर्वैरेतैर्वरवरमुने! शश्वदुद्दिश्य सेव्यं काङ्क्षत्येतत् कथमयमहो! कामकामः पदाब्जम् ॥ ३४ ॥

प्राप्तः क्षेमं प्रकृतिमधुरैः प्रागपि त्वत्कटाक्षैः सोऽयं जन्तुः त्वदनुभजनं त्वत्क एवाप्तुमिच्छन् ।
क्रन्दत्युच्चैः कलुषमतिभिस्संवसन् कामकामैः कालक्षेपो वरवरमुने! तत्कथं युज्यते ते ॥ ३५ ॥

कोणैरक्ष्णः कुमनसमिमं निर्मलं कल्पयित्वा हातुं दूरे वरवरमुने! हा कथं युज्यते ते ।
पाथः पातुं प्रयतनपरः पङ्किलं शोधयित्वा पङ्के मुञ्चन् पुनरिदमतः प्राप्नुयादेव किं वा ॥ ३६ ॥

कालः किं स्वं(स्वित्)न भवति स मे काङ्क्षितः काङ्क्षितानां यस्मिन्नस्मादनलजलधेरुत्प्लुतस्त्वां नमस्यन् ।
सिक्तः श्रीमन्! वरवरमुने! शीतलैस्त्वत्कटाक्षैः मुक्तस्तापैरमृतमतुलं गाहते मोदमानः ॥ ३७ ॥

पारावारप्लवनचतुरः कुञ्जरो वानराणां पद्माभर्तुः प्रियसहचरः पत्त्रिणामीश्वरो वा ।
वायुर्भूत्वा सपदि यदि वा मार्गमुल्लङ्घ्य दुर्गं काले काले वरवरमुने! कामये वीक्षितुं त्वाम् ॥ ३८ ॥

कामक्रोधक्षुभितहृदयाः कारणं वर्जयित्वा मर्त्यौपम्यं वरवरमुने! ये पुनर्मन्वते ते ।
दुष्टं तेषामभिमततया दुर्वसं देशमृच्छन् अन्तः स्वान्तं कथमपि मिथो भावयेयं भवन्तम् ॥ ३९ ॥

नामैतत्ते नवनवरसं नाथ संकीर्त्य नृत्यन् अन्तः कर्तुं वरवरमुने! नित्यमिच्छत्ययं त्वाम् ।
अर्धं निद्रा हरति दिवसस्यार्धमन्यत् नृशंसं वासो मूढैर्मलिनमतिभिर्वाक्प्रवृत्तिं निरुन्धे ॥ ४० ॥

अन्तर्ध्यायन् वरवरमुने! यद्यपि त्वामजस्रं विश्वं तापैस्त्रिभिरभिहतं वीक्ष्य मुह्याम्यसह्यम् ।
क्षुत्संपातक्षुभितमनसां को हि मध्ये बहूनाम् एकः स्वादु स्वयमनुभवन्नेति चेतःप्रसादम् ॥ ४१ ॥

सत्त्वोदग्रैस्सकलभुवनश्लाघनीयैश्चरित्रैः त्रय्यन्तार्थप्रकटनपरैः सारगर्भैर्वचोभिः ।
लोकोत्तीर्णं वरवरमुने! लोकसामान्यदृष्ट्या जानानस्त्वां कथमपि न मे जायतामक्षिगम्यः ॥ ४२ ॥

कल्याणैकप्रवणमनसं कल्मषोपप्लुतानां क्षान्तिस्थेमद्रढिमसमताशीलवात्सल्यसिन्धो! ।
त्वामेवायं वरवरमुने! चिन्तयन्नीप्सति त्वाम् आर्तं श्रीमन्! कृपणमपि मामर्हसि त्रातुमेव ॥ ४३ ॥

दोषैकान्ती दुरितजलधिर्देशिको दुर्मतीनां मूढो जन्तुर्ध्रुवमयमिति श्रीमता मोचनीयः ।
पादूयुग्मं भवदनुचरैरर्पितं भक्तिनम्रे मौलौ कृत्वा वरवरमुने! वर्ततां तत्र धन्यः ॥ ४४ ॥

नित्यं निद्राविगमसमये निर्विशङ्कैरनेकैः त्वन्नामैव श्रुतिसुमधुरं गीयमानं त्वदीयैः ।
प्रायस्तेषां प्रपदनपरो निर्भरस्त्वत्प्रियाणां पादाम्भोजे वरवरमुने! पातुमिच्छाम्यहं ते ॥ ४५ ॥

अन्तःस्वान्तं कमपि मधुरं मन्त्रमावर्तयन्तीम् उद्यद्बाष्पस्तिमितनयनामुज्झिताशेषवृत्तिम् ।
व्याख्यागर्भं वरवरमुने! त्वन्मुखं वीक्षमाणां कोणे लीनः क्वचिदणुरसौ संततं तामुपास्ताम् ॥ ४६ ॥

आबिभ्राणश्चरणयुगलीमर्पितां त्वत्प्रसादात् वारं वारं वरवरमुने! वन्दमानेन मूर्ध्ना ।
शृण्वन् वाचः श्रुतिशतशिरस्तत्त्वसञ्जीवनीस्ते पश्यन् मूर्तिं परिषदि सतां प्रेक्षणीयो भवेयम् ॥ ४७ ॥

काले यस्मिन् कमलनयनं देवमालोकयिष्यन् निर्यासि त्वं वरवरमुने! नित्ययुक्तैस्त्वदीयैः ।
अग्रे नृत्यन्नयमपि तदा गाहतां हर्षसिन्धौ मज्जंमज्जं मधुवनजुषां वैभवं यूथपानाम् ॥ ४८ ॥

भूत्वा पश्चात् पुनरयमथ व्योम्नि गोपायमानः भूयः पार्श्वद्वितयसुषमासागरं गाहमानः ।
जल्पन्नुच्चैर्जय जय विभो! जीव जीवेति वाचं शंसन् मार्गं वरवरमुने! सौविदल्लो भवेयम् ॥ ४९ ॥

देवी गोदा यतिपतिशठद्वेषिणौ रङ्गशृङ्गं सेनानाथो विहगवृषभः श्रीनिधिस्सिन्धुकन्या ।
भूमानीलागुरुजनवृतः पूरुषश्चेत्यमीषाम् अग्रे नित्यं वरवरमुनेरङ्घ्रियुग्मं प्रपद्ये ॥ ५० ॥

भृत्यैर्द्वित्रैः प्रियहितपरैरञ्चिते भद्रपीठे तुङ्गं तूलासनवरमलंकुर्वतस्सोपधानम् ।
अङ्घ्रिद्वन्द्वं वरवरमुनेरब्जचक्राभिताम्रं मौलौ वक्त्रे भुजशिरसि मे वक्षसि स्यात् क्रमेण ॥ ५१ ॥

अग्रे पश्चादुपरि परितो भूतले पार्श्वतो मे मौलौ वक्त्रे वपुषि सकले मानसाम्भोरुहे च ।
दर्शं दर्शं वरवरमुने! दिव्यमङ्घ्रिद्वयं ते नित्यं मज्जन्नमृतजलधौ निस्तरेयं भवाब्धिम् ॥ ५२ ॥

कर्माधीने वपुषि कुमतिः कल्पयन्नात्मभावं दुःखे मग्नः किमिति सुचिरं दूयते जन्तुरेषः ।
सर्वं त्यक्त्वा वरवरमुने संप्रति त्वत्प्रसादात् दिव्यं प्राप्तुं तव पदयुगं देहि मे सुप्रभातम् ॥ ५३ ॥

या या वृत्तिर्मनसि मम सा जायतां संस्मृतिस्ते यो यो जल्पस्स भवतु विभो नामसङ्कीर्तनं ते ।
या या चेष्टा वपुषि भगवन्! सा भवेद्वन्दनं ते सर्वं भूयाद्वरवरमुने सम्यगाराधनं ते ॥ ५४ ॥

कामावेशः कलुषमनसामिन्द्रियार्थेषु योऽसौ भूयो नाथे मम तु शतधा वर्तताभेव भूयान् ।
भूयोऽप्येवं वरवरमुने! पूजने त्वत्प्रियाणां भूयो भूयस्तदनुभजने पूर्णकामो भवेयम् ॥ ५५ ॥

भक्ष्याभक्ष्ये भयविरहितस्सर्वतो भक्षयित्वा सेव्यासेव्यौ समयरहितस्सेवया तोषयित्वा ।
कृत्याकृत्ये किमपि नविदन् गर्हितं वाऽपि कृत्वा कर्तुं युक्तं वरवरमुने! काङ्क्षितं त्वत्प्रियाणाम् ॥ ५६ ॥

वृत्तिं त्वातुं वरवरमुने! विश्वतो वीतरागैः प्राप्यं सद्भिः परमिदमसौ नेच्छति ब्रह्मसाम्यम् ।
निर्मर्यादः पततु निरये निन्दितैरप्यनल्पैः लब्ध्वा किंचित् त्वदनुभजनं त्वन्मुखोल्लासमूलम् ॥ ५७ ॥

नासौ वासं नभसि परमे वाञ्छति त्वत्प्रसादात् मर्त्यावासो यदिह सुलभः कोऽपि लाभो महीयान् ।
किंचित्कृत्वा वरवरमुने! केवलं त्वत्प्रियाणां पश्यन् प्रीतिं भवति भवतो वीक्षणानां निधानम् ॥ ५८ ॥

अस्माद्भूयांस्त्वमसि विविधानात्मनश्शोधयित्वा पद्माभर्तुः प्रतिदिनमिह प्रेषयन् प्राभृतानि ।
तस्मिन् दिव्ये वरवरमुने! धामनि ब्रह्मसाम्यात् पात्रीभूतो भवति भगवन् नैव किंचिद्दयायाः ॥ ५९ ॥

जप्यं नान्यत् किमपि यदि मे दिव्यनाम्नस्त्वदीयात् नैवोपास्यं नयनसुभगादङ्घ्रियुग्माद्दते ते ।
प्राप्यं किंचिन्न भवति परं प्रेष्यभावादृते ते भूयादस्मिन् वरवरमुने! भूतले नित्यवासः ॥ ६० ॥

मन्त्रो दैवं फलमिति मया वाञ्छितं यद्यपि स्यात् मध्ये वासो मलिनमनसामेवमेवं यदि स्यात् ।
यद्वा किंचित्त्वदनुभजनं सर्वथा दुर्लभं स्यात् देहं त्यक्तुं वरवरमुने! दीयतां निश्चयो मे ॥ ६१ ॥

आचार्यत्वं तदधिकमिति ख्यातमाम्नायमुख्यैः एषः श्रीमान् भवति भगवानीश्वरत्वं विहाय ।
मन्त्रं दाता वरवरमुने! मन्त्ररत्नं त्वदीयं देवः श्रीमान् वरवरमुनिर्वर्तते देशिकत्वे ॥ ६२ ॥

आत्मानात्मप्रमितिविरहात् पत्युरत्यन्तदूरः घोरे तापत्रितयकुहरे घूर्णमानो जनोऽयम् ।
पादच्छायां वरवरमुने! प्रापितो यत्प्रसादात् तस्मै देयं तदिह किमिव श्रीनिधे! विद्यते ते ॥ ६३ ॥

विख्यातं यद्रघुकुलपतेर्विश्वतः क्ष्मातलेऽस्मिन् नित्योदग्रं वरवरमुने! निस्सपत्नं महत्त्वम् ।
पश्यन्नन्धः प्रकृतिविवशो बालिशो यादृशोऽयं तत्त्वं तस्य प्रकटयसि मे तादृशैरेव योगैः ॥ ६४ ॥

लक्ष्मीभर्तुः परमगुरुतां लक्षयन्ती गुरूणां पारम्पर्यक्रमविवरणी या हि वाणी पुराणी ।
अर्थं तस्याः प्रथयसि चिरादन्यतो यद्दुरापं दिव्यं तन्मे वरवरमुने वैभवं दर्शयित्वा ॥ ६५ ॥

तत्त्वं यत्ते किमपि तपसा तप्यतामप्यृषीणां दूराद्दूरं वरवरमुने! दुष्कृतैकान्तिनो मे ।
व्याकुर्वाणः प्रतिपदमिदं व्यक्तमेवं दयावान् नाथो नैतत् किमिति जगति ख्यापयत्यद्वितीयम् ॥ ६६ ॥

कालेकाले कमलजनुषां नास्ति कल्पायुतं किं कल्पेकल्पे हरिरवतरन् कल्पते किं न मुक्त्यै ।
मृत्वामृत्वा तदपि दुरितैरुद्भवन्तो दुरन्तैः अद्यापि त्वां वरवरमुने! हन्त नैवाश्रयन्ते ॥ ६७ ॥

कारागारे वरवरमुने! वर्तमानश्शरीरे तापैरेष त्रिभिरपि चिरं दुस्तरैस्तप्यमानः ।
इच्छन् भोक्तुं तदपि विषयानेव लोकः क्षुधार्तः हित्वैव त्वां विलुठति बहिर्द्वारि पृथ्वीपतीनाम् ॥ ६८ ॥

मध्ये मांसक्षतजगहनं विड्भुजामेव भोज्यं दीनो वोढुं दृढमिति वपुश्चेष्टते रात्र्यहानि ।
भग्ने तस्मिन् परिणमति यः पातकी यातनाभ्यः देही नित्यो वरवरमुने! केन जिज्ञासनीयः ॥ ६९ ॥

अल्पादल्पं क्षणिकमसकृद्दुष्कृतान्येव कृत्वा दुःखोदग्रं सुखमभिलषन् दुर्लभैरिन्द्रियार्थैः ।
मोघं कृत्वा वरवरमुने! मुक्तिमूलं शरीरं मज्जत्यन्धे तमसि मनुजस्त्वप्रियस्त्वत्प्रियाणाम् ॥ ७० ॥

पश्यन्नेव प्रभवति जनो नेक्षितुं त्वत्प्रभावं प्राज्ञैरुक्तं पुनरपि हसन् दर्शयत्यभ्यसूयाम्
नश्यत्यस्मिन् वरवरमुने! नाथ! युक्तं तदस्मिन् प्रत्यक्षं तत्परिकलयितुं तत्त्वमप्राकृतं ते ॥ ७१ ॥

सत्त्वोन्मेषप्रमुषितमनःकल्मषैस्सत्त्वनिष्ठैः सङ्गं त्यक्त्वा सकलमपि यस्सेव्यसे वीतरागैः ।
तस्मै तुभ्यं वरवरमुने! दर्शयन्नभ्यसूयां कस्मै कृत्वा किमिव कुमतिः कल्पतामिष्टसिद्ध्यै ॥ ७२ ॥

दिव्यं तत्ते यदिह कृपया देवदेवोपदिष्टं तत्त्वं भूयाद्वरवरमुने! सर्वलोकोपलभ्यम् ।
व्यक्ते तस्मिन् विदधति भवद्द्वेषिणो ये द्वेषं त्यक्त्वा सपदि दुरितध्वंसिनीं त्वत्सपर्याम् ॥ ७३ ॥

केचित्स्वैरं वरवरमुने! केशवं संश्रयन्ते तानप्यन्ये तमपि सुधियस्तोषयन्त्यात्मवृत्त्या ।
त्वत्तो नान्यत्किमपि शरणं यस्य सोऽयं त्वदीयः भृत्यो नित्यं भवति भवतः प्रेयसां प्रेमपात्रम् ॥ ७४ ॥

दीने पूर्णां भवदनुचरे देहि दृष्टिं दयार्द्रां भक्त्युत्कर्षं वरवरमुने! तादृशं भावयन्तीम् ।
येन श्रीमन्! द्रुतमहमितः प्राप्य युष्मत्पदाब्जं त्वद्विश्लेषे तनुविरहितस्तत्र लीनो भवेयम् ॥ ७५ ॥

त्वत्पादाब्जं भवतु! भगवन्! दुर्लभं दुष्कृतो मे वासोऽपि स्याद्वरवरमुने! दूरतस्त्वत्प्रियाणाम् ।
त्वद्वैमुख्याद्विफलजनुषो ये पुनस्तृणमेषां दूरीभूतः क्वचन गहने पूर्णकामो भवेयम् ॥ ७६ ॥

सिंहव्याघ्रौ सपदि विपिने पन्नगः पावको वा कुर्युः प्राणान्तकमपि भयं को विरोधस्ततो मे ।
नैते दोषग्रहणरुचयस्त्वप्रियैर्निर्निमित्तैः नानाजल्पैर्वरवरमुने! नाशयन्त्यन्तिकस्थान् ॥ ७७ ॥

त्वद्भृत्यानामनुभजति यस्सर्वतो भृत्यकृत्यं तद्भृत्यानामभिलषति यस्तादृशं प्रेष्यभावम् ।
मद्भृत्योऽसाविति मयि स चेत् सानुकम्पैरपाङ्गैः क्षेमं कुर्याद्वरवरमुने! किं पुनश्शिष्यते मे ॥ ७८ ॥

क्वाहं क्षुद्रः कुलिशहृदयो दुर्मतिः क्वात्मचिन्ता त्र्यन्तानामसुलभतरं तत्परं क्वात्मतत्त्वम् ।
इत्थंभूते वरवरमुने! यत्पुनः स्वात्मरूपं द्रष्टुं तत्तत्समयसदृशं देहि मे बुद्धियोगम् ॥ ७९ ॥

सोढुं तादृग्रघुपरिबृढो न क्षमस्त्वद्वियोगं सद्यः काङ्क्षन् वरवरमुने! सन्निकर्षं तवैषः ।
सायंप्रातस्तव पदयुगं शश्वदुद्दिश्य दिव्यं मुञ्चन् बाष्पं मुकुलितकरो वन्दते हन्त मूर्ध्ना ॥ ८० ॥

अन्तस्ताम्यन् रघुपतिरसावन्तिके त्वामदृष्ट्वा चिन्ताक्रान्तो वरवरमुने! चेतसो विश्रमाय ।
त्वन्नामैव श्रुतिसुखमिति श्रोतुकामो मुहुर्मां कृत्यैरन्यैः किमिह तदिदं कीर्तयेति ब्रवीति ॥ ८१ ॥

भुङ्क्ते नैव प्रथमकवले यस्त्वया नोपभुङ्क्ते निद्रा नैव स्पृशति सुहृदं त्वां विना यस्य नेत्रे ।
हीनो येन त्वमसि सलिलोत्क्षिप्तमीनोपमानः कोऽसौ सोढुं वरवरमुने! राघवस्त्वद्वियोगम् ॥ ८२ ॥

पत्रं मूलं सलिलमपि यत्पाणिनोपाहृतं ते मात्रा दत्तादपि बहुमतं पत्युरेतद्रघूणाम् ।
शाखागेहं समजनि विभोस्सम्मतं सौधशृङ्गं भूत्वा वासो महदपि वनं भोगभूमिस्त्वयाऽभूत् ॥ ८३ ॥

अध्वश्रान्तिं हरसि सरसैरार्द्रशाखासमीरैः पादौ संवाहयसि कुरुषे पर्णशालां विशालाम् ।
भोज्यं दत्वा वरवरमुने! कल्पयन् पुष्पशय्यां पश्यन् धन्यो निशि रघुपतिं पासि पत्नीसहायम् ॥ ८४ ॥

पश्यन्नग्रे परिमितहितस्निग्धवाग्वृत्तियोगं सद्यश्शोकप्रशमनपरं सान्त्वयन्तं भवन्तम् ।
प्राज्ञो जज्ञे स खलु भगवान् दूयमानो वनान्ते पश्चात्कर्तुं वरवरमुने! जानकीविप्रयोगम् ॥ ८५ ॥

सुग्रीवो नश्शरणमिति यत्सूनृतं भ्रातुरर्थे पम्पातीरे पवनजनुषा भावितं शोभते ते ।
कालातीते कपिकुलपतौ देव तत्रैव पश्चात् चापं धून्वन् वरवरमुने! यद्भवान् निग्रहेऽभूत् ॥ ८६ ॥

यस्मिन् प्रीतिं मदभिलषितामार्यपुत्रो विधत्ते येनोपेतः स्मरति न पितुस्सोऽतिवीरो गतिर्मे ।
इत्येवं त्वां प्रति रघुपतिप्रेयसी संदिशन्ती व्यक्तं देवी वरवरमुने! तत्त्वमाह त्वदीयम् ॥ ८७ ॥

बाणैर्यस्य ज्वलनवदनैर्वाहिनी वानराणां वात्यावेगभ्रमितजलदस्तोमसाधर्म्यमेति ।
सोऽयं भग्नो वरवरमुने! मेघनादश्शरैस्ते रक्षोनाथः कथमितरथा हन्यते राघवेण ॥ ८८ ॥

पृथ्वीं भित्त्वा पुनरपि दिवं प्रेयसीमश्नुवानां दृष्ट्वा श्रीमद्वदनकमले दत्तदृष्टिः प्रसीदन् ।
प्रेमोदग्रैर्वरवरमुने! भृत्यकृत्यैस्त्वदीयैः नीतः प्रीतिं प्रतिदिनमसौ शासिता नैर्ऋतानाम् ॥ ८९ ॥

सोदर्येषु त्वमसि दयितो यस्य भृत्यस्सुहृद्वा सोढव्योऽभूत् त्वयि सहचरे जानकीविप्रयोगः ।
ध्यायंध्यायं वरवरमुने! तस्य ते विप्रयोगं मन्येऽनिद्रामरतिजनितां मानयत्यग्रजोऽयम् ॥ ९० ॥

मुग्धालोकं मुखमनुभवन् मोदते नैव देव्याः स्निग्धालापं कपिकुलपतिं नैव सिञ्चत्यपाङ्गैः ।
त्वामेवैकं वरवरमुने! सोदरं द्रष्टुकामः नाथो नैति क्वचिदपि रतिं दर्शने यूथपानाम् ॥ ९१ ॥

एवं देवं स्वयमभिलषन्नेष ते शेषवृत्तिं जज्ञे भूयस्त्वदनुजगदानन्दनो नन्दसूनुः ।
दूरीभावं वरवरमुने! दुस्सहं पूर्वजस्ते धन्यस्त्यक्त्वा धयतु न चिराच्चक्षुषा राघवस्त्वाम् ॥ ९२ ॥

पायंपायं प्रणयमधुरे पादपद्मे त्वदीये पश्येयं तत्किमपि मनसा भावयन्तं भवन्तम् ।
कामक्रोधप्रकृतिरहितैः काङ्क्षितत्वत्प्रसादैः सद्भिः साकं वरवरमुने! सन्ततं वर्तिषीय ॥ ९३ ॥

पश्यत्वेनं जनकतनया पद्मगर्भैरपाङ्गैः प्रारब्धानि प्रशमयतु मे भागधेयं रघूणाम् ।
आविर्भूयादमलकमलोदग्रमक्ष्णोः पदं मे दिव्यं तेजो वरवरमुने देवदेव! त्वदीयम् ॥ ९४ ॥

रामः श्रीमान् रविसुतसखो वर्धतां यूथपालैः देवी तस्मै दिशतु कुशलं मैथिली नित्ययोगात् ।
सानुक्रोशो जयतु जनयन् सर्वतस्तत्प्रसादं सौमित्रिर्मे स खलु भगवान् सौम्यजामातृयोगी ॥ ९५ ॥

यस्मादेतद्यदुपनिषदामप्रमेयं प्रमेयं कुर्वाणस्तत्सकलसुलभं कोमलैरेव वाक्यैः ।
नीरोगस्त्वं वरदगुरुणा नित्ययुक्तो धरित्रीं पाहि श्रीमन्! वरवरमुने! पद्मयोनेर्दिनानि ॥ ९६ ॥

वरवरमुनिवर्य! चिन्तामहन्तामुष्य तावकीम अविरतमनुवर्तमानानमानात्ममानानिमान् ।
निरुपधिपदभक्तिनिष्ठाननुष्ठाननिष्ठानहं प्रतिदिनमनुभूय भूयो न भूयासमायासभूः ॥ ९७ ॥

वरवरमुनिवर्यपादावुपादाय सौदामनीविलसितविभवेषु वित्तेषु पुत्रेषु मुक्तेषणाः ।
कतिचन यतिवर्यगोष्ठीबहिष्ठीकृतष्ठीवनाः विजहति जनिमृत्युनित्यानुवृत्त्या यदत्याहितम् ॥ ९८ ॥

निरवधिनिगमान्तविद्यानिषद्यानवद्याशयान् यतिपतिपदपद्मबन्धानुबन्धानुसन्धायिनः ।
वरवरमुनिवर्यसम्बन्धसम्बन्धसम्बन्धिनः प्रतिदिनमनुभूय भूयो न भूयासमायासभूः ॥ ९९ ॥

यन्मूलमाश्वयुजमास्यवतारमूलं कान्तोपयन्तृयमिनः करुणैकसिन्धोः ।
आसीदसत्सु गणितस्य ममापि सत्तामूलं तदेव जगदभ्युदयैकमूलम् ॥ १०० ॥

मूलं शठारिमुखसूक्तिविवेचनायाः कूलं कवेरदुहितुः समुपागतस्य ।
आलम्बनस्य मम सौम्यवरस्य जन्ममूलं विभाति सतुलं वितुलं च चित्रम् ॥ १०१ ॥

जयतु यशसा तुङ्गं रङ्गं जगत्त्रयमङ्गलं जयतु सुचिरं तस्मिन् भूमा रमामणिभूषणम् ।
वरदगुरुणा सार्धं तस्मै शुभान्यभिवर्धयन् वरवरमुनिः श्रीमान् रामानुजो जयतु क्षितौ ॥ १०२ ॥

पठति शतकमेतत् प्रत्यहं यस्सुजानन स हि भवति निधानं सम्पदामीप्सितानाम् ।
प्रशमयति विपाकं पातकानां गुरूणां प्रथयति च निदानं पारमाप्तुं भवाब्धेः ॥ १०३ ॥

अनुदिनमनवद्यैः पद्यबन्धैरमीभिः वरवरमुनितत्त्वं व्यक्तमुद्घोषयन्तम् ।
अनुपदमनुगच्छन्नप्रमेयः श्रुतीनाम् अभिलषितमशेषं सूयते शेषशायी ॥ १०४ ॥

इति श्रीदेवराजगुरुभिरनुगृहीतं श्रीवरवरमुनिशतकं समाप्तम् ॥

श्रीप्रतिवादिभयङ्करार्यप्रणीतं

## ॥ श्रीमद्वरवरमुनिशतकम् ॥

वेदान्तदेशिककटाक्षविवृद्धबोधं कान्तोपयन्तृयमिनः करुणैकपात्रम् ।
वत्सान्ववायमनवद्यगुणैरुपेतं भक्त्या भजामि परवादिभयङ्करार्यम् ॥

मूलेऽवतीर्णमिह मूलमनूदितार्थतत्त्वावबोधसुखितां वसुधां विधातुम् ।
रामानुजार्यचरणाम्बुजचञ्चरीकं रम्योपयन्तृयमिनं शरणं प्रपद्ये ॥ १ ॥

यदवतरणमूलं मुक्तिमूलं प्रजानां शठरिपुमुनिदृष्टाम्नायसाम्राज्यमूलम् ।
कलिकलुषसमूलोन्मूलने मूलमिन्धे स भवतु वरयोगी नस्समस्तार्थमूलम् ॥ २ ॥

जनिविपदपवादौ यस्य पादौ विदन्तः सततमपि महान्तस्स्वान्त एवोद्वहन्ति ।
स जयति भजदन्तर्ध्वान्तकल्पान्तभानुर्निरवधिगुणकान्तो हन्त कान्तोपयन्ता ॥ ३ ।

इन्धे वाक्यविभूषणस्य महतो यद्भाषणं भूषणं यत्पादाम्बुरुहद्वयं सुमनसां मूर्ध्नस्सदा भूषणम् ।
यद्भक्ताङ्घ्रिरजःकणो वितनुते दुःखोदधेश्शोषणं वन्दे कान्तवरं मुनिं तमनघं नित्यं कलेर्भीषणम् ॥ ४ ॥

यत्पादाम्बुजसंश्रयेण विमला यल्लब्धबोधोज्ज्वला यत्सेवैकरसास्स्वशिष्यनिवहव्याप्ताखिलाशान्तराः ।
प्रख्याता हि वरप्रदप्रभृतयस्ते नित्यसिद्धोपमास्तस्मात्कान्तवरान्मुनेरनुपमाद्दैवं परं नाद्रिये ॥ ५ ॥

यत्सूक्त्येकरसा यदङ्घ्रियुगलीसेवैकहेवाकिनो यद्वात्सल्यदयादिसद्गुणगणाकूपारमग्नाशयाः ।
मन्यन्ते न परं विमुक्तिकरणं सन्तो यदालोकनात् तन्यान्नस्स शुभान्यवेलमहिमा कान्तोपयन्ता मुनिः॥६॥

यद्वाणी शठवैरिसूक्तितरुणीमाङ्गल्यदीपावलिः यद्दीक्षा स्वशरव्यसर्वजनतासर्वार्थचिन्तामणिः ।
यन्मूर्तिर्भजदार्तिभञ्जनचणां सूक्तिं विवक्त्यञ्जसा भूयान्नस्सततं स मे हृदि गुरुः कान्तोपयन्ता मुनिः॥ ७॥

अवाग्भूषाजुष्टैरभुवनगुरुप्रेमभरितैरमूलक्ष्मोद्भूतैरवरदगुरूपासितपदैः ।
कृतं तैस्तैस्सर्वैर्गुरुभिरमहायोगिभिरिति व्यवस्यन्तस्सन्तो हृदि मम लसन्तु प्रतिकलम् ॥ ८ ॥

न खल्ववरयोगिनां भजनतः फलस्योद्भवः तदन्यविमुखास्सदा वरमुनिं भजध्वं जनाः ।
तदङ्घ्रिभजनं सकृत्कृतमशेषतो दुष्कृतं निवारयति भूयसीं श्रियमनुत्तमां पुष्यति ॥ ९ ॥

सुराहारासारीकरणचणयत्सूक्तिलहरीगरीयस्तां स्तोतुं प्रभवति न वाचस्पतिरपि ।
स नस्तन्यादन्यादृशमहिमशाली वरवरो मुनीन्द्रो निस्तन्द्रः कुशलमनुवेलं गुरुवरः ॥ १० ॥

कलानिधिशिरोमणिर्जितमनोभवो यद्वचस्सुधाशनतरङ्गिणीं दधदनारतं मूर्धनि ।
शिवोऽपि यदुपाश्रितो विषमदृष्टितादूरगस्स मे दिशतु मङ्गलं वरवरो मुनीनां वरः ॥ ११ ॥

कल्याणाचलधर्मभागसमगुर्यत्संश्रितो भूतिमान् बिभ्रद्यस्य कलानिधेः किल कलां मूर्ध्ना भृशं निर्मलाम् ।
कृत्ताहीनविभूषणः स्मरजितस्सायुज्यमाटीकते सोऽव्यान्नस्सततं मुनिर्वरवरोऽनन्यार्हतेजोनिधिः ॥ १२ ॥

यद्भक्तो नाभिभूतो मदनमथनकृद्वाग्विलासैकभूमिः नालीकस्थोऽकृतोक्तिव्यवहृतिचतुरास्यत्वसंप्राप्तभूमा ।
संप्राप्यानन्यलभ्यां कमलभवतुलामेधते सत्यधामा सोऽव्यान्नः क्षान्तिसिन्धुर्निरवधिमहिमा सौम्यजामातृयोगी ॥

शिरसि वहतां यत्पादाम्भः कलानिधिमौलिता जयति वरदाचार्यादीनामनन्यसमाश्रया ।
स हि वरमुनिस्साक्षान्नारायणस्तत एव तच्चरणशरणास्सर्वेऽप्युर्व्यां तरन्ति भवार्णवम् ॥ १४ ॥

जलजनिलयाकान्तोऽनन्तद्विजोत्तमसेवितो जलजविलसत्पाणिर्नित्यं करस्थसुदर्शनः ।
सकलसुमनोवैरिव्रातावलेपविलोपकृत् मधुरिपुतुलाकान्तः कान्तोपयन्तृमुनीश्वरः ॥ १५ ॥

यद्वाग्जालं मधुजिदतनुच्छेदिनालीकवासोत्कृत्तोद्वृत्तासुरसुरवरैस्सादरं सेव्यमानम् ।
पद्मावासा क्षितिधरसुता वाक्छचीकान्तभूतैः कान्त्या कान्तं स जयतु महायोगिकान्तोपयन्ता ॥ १६ ॥

हृद्या यस्य सरस्वती सुविमला तापानशेषानपि द्रागुन्मूलयति श्रुताऽपि भविनां शुद्धिं विधत्ते पराम् ।
भङ्गं नैति कदाऽपि कुत्रचिदपि प्राप्ताऽपि गम्भीरतां सोऽव्यान्मामतिवेलवैभवनिधिः कान्तोपयन्ता मुनिः ॥१७॥

समिन्धे यत्सूक्तिस्सकलसुमनोमौलिविधृता शिवत्वं सर्वेषामपि विदधती स्वान्वयवताम् ।
विधोरत्यासन्ना निरवधिकपूर्त्या विलसतस्सदा गङ्गोत्तुङ्गा जयति स मुनिस्सुन्दरवरः ॥ १८ ॥

सूर्यानन्दविधायिनीति यमुना कान्तोपयन्तुर्मुनेः वाणीव व्यवहारभाग्भवतु सा किं तावता स्यात्समा ।
शुद्धेयं न हि सा स्वकं श्रितवतां तापानशेषानियं सर्वेषां विनिवार्य कर्तुममितं श्रेयः क्षमा नैव सा ॥ १९ ॥

विहरति यमुनायास्स्रोतसीवातिहृद्ये वचसि मनसि च श्रीमाधवो यस्य नित्यम् ।
निरुपममहिमानं योगिनं तं महान्तं निरवधिगुणकान्तं चिन्तय स्वान्त! नित्यम् ॥ २० ॥

कृतावगाहा जनता यदीयसारस्वतस्रोतसि तुङ्गभद्रा ।
संसेव्यमाना कविभिस्समिन्धे पायात्स नः कान्तवरो मुनीन्द्रः ॥ २१ ॥

यद्वाणीं मधुरामवाप्य सुधियस्साकेतधामत्यजो मायासङ्गविदूरगाश्च सुतरां सन्त्यक्तकाश्याश्रयाः ।
काञ्च्यादिष्वपि निःस्पृहाश्च सततं रामानुजैकान्तिनो राजन्ते स तनोतु सुन्दरवरो योगीश्वरो नश्शुभम् ॥२२॥

यद्वाणीमपराजितां मधुजिदुल्लासास्पदं सन्ततं शेषाहीनवलद्विजेन्द्रमहितां मुक्तावलीबन्धुराम् ।
शुद्धस्सम्प्रतिपद्य हृष्यति जनो नोपैति पापोत्तरस्तस्मात्कान्तवरान्मुनेरनुपमाद्दैवं परं नाश्रये ॥ २३ ॥

यद्वाणीविरजावगाहनकलाधौतात्मनामात्मनां प्रज्ञानर्जितनिर्जरेश्वरगुरुप्रौढिं समाढौकते ।
भक्तिः श्रीशतदीयदेशिकपदाधारा जरीजृम्भ्यते मुक्तिर्याति करापचेयफलतां सोऽव्याद्वरोऽस्मान्मुनिः ॥ २४ ॥

यच्छिष्यास्तिष्यडिम्भप्रतिमकुमतिदुस्तर्कसम्पर्कजातत्रय्यन्तस्वापरूपाप्रतिमनिरवधिध्वान्तकल्पान्तसूर्याः ।
श्रीमद्रामानुजार्योदितमतममतामूर्तयः कीर्तिमन्तो जाग्रत्यस्मै नमस्ताद्वरवरमुनयेऽनन्तनिस्तुल्यभूम्ने ॥ २५ ॥

अनिमिषतनुर्ब्रह्मा निर्वेदभावनिबन्धनं भजति किल यश्श्रीमन्मत्स्यावतारतुलां हरेः ।
स जयति सतां सद्भिस्सौम्योपयन्तृममाश्रयस्तमिह सततं चेतस्सेवस्व सद्गुणशेवधिम् ॥ २६ ॥

प्रापयन्नमृतकाङ्क्षिणोऽमृतं मन्दरागभरणेऽपि सादरः। दिव्यकूर्मसदृशो यदाश्रितस्सद्गणोऽवतु स मां वरो मुनिः॥२७॥

सौकर्यवान् यत्पदभक्तिशाली भवाब्धिमग्नोद्धरणप्रवीणः। आटीकते ह्याद्यकिटेरभिख्यां मुनिस्स नः पातु वरोपयन्ता॥

हिरण्यजिद्यत्पदभक्तिशाली नृसिंहभावं प्रकटीकरोति। स मे विधत्तामतुलानुभावो वरोपयन्ता कुशलान्यजस्रम् ॥

भजते किल वामनोपमां सुमनोवैरिबलिस्स्वयं हरन् । शुभविक्रमभृद्यदाश्रितस्तमुपासे वरयोगिशेखरम् ॥ ३० ॥

महीभरकुदृग्बलक्षपणदक्षिणौजोभृतः यदङ्घ्रिसमुपाश्रयाः परशुरामसाधर्म्यगाः ।
जयन्त्यखिलपापभीमहितविष्णुधर्मान्विताः स नो वरवरो मुनिर्वितरतु श्रियं सन्ततम् ॥ ३१ ॥

सहजानघलक्ष्मणान्विता वसुमत्युद्भवया श्रियोज्ज्वलाः। रघुवर्यसमा यदाश्रिता वरयोगी स शुभं तनोतु नः॥३२

अधिगतबलभद्राभिख्यया यत्पदाब्जप्रवणजनसमष्ट्या वासुदेवाग्रजस्य ।
अनितरजनलभ्या लभ्यते साम्यलक्ष्मीस्स जयति वरयोगी निस्तुलावेलभूमा ॥ ३३ ॥

सधर्मजातार्जुनचित्तहर्षप्रध्वंसिपक्षक्षपणप्रवीणाः। यदाश्रयाः कृष्णतुलां भजन्ते पायात्स नः कान्तवरो मुनीन्द्रः ॥३४॥

कलिदोषमशेषतः क्षितौ क्षपयन् कलिकतुलाविहारभूः। यदुपाश्रितसज्जनस्स नस्सततं सौम्यवरोऽभिरक्षतु॥३५॥
अहीनभोगप्रवणस्समिन्धे श्रीरङ्गधामा किल रङ्गभर्तुः। साधर्म्यमासाद्य यदङ्घ्रिभक्तः पायात्स नः सौम्यवरो मुनीन्द्रः॥

वृषाचलस्थितिं भजन् वहन्ननारतं श्रियं सुदुर्लभागमाखिलार्थदानकेलिकीर्तिमान्।
विभाति वेङ्कटेशवद्यदङ्घ्रिसेविनां गणस्स नस्तनोतु मङ्गलं वरोपयन्तृदेशिकः॥ ३७॥

भक्ताखिलार्थाधिगमैकहेतुं श्रीपुण्यकोट्यायतनं यदीयम्। विदन्ति सन्तो वरदेन तुल्यं वरो मुनिर्नस्स तनोतु भद्रम्॥
कान्तं वरं प्राप्य सती मदीया मतिः परस्मिन्पुरुषे विरक्ता। तत्सद्गुणास्वादरसैकलोला पतिव्रतोदाहरणत्वमेतु॥ ३९॥

सरसि कृतविहारं ध्यानमात्रेण पुंसां शमितसकलतापे हंससंसेव्यमाने।
भजति मुदमवेलां सन्ततं यस्य चेतः स भवतु वरयोगी मानसे मामकीने॥ ४०॥

सारासारविवेचनैकरसिकं सारस्वतं सारसं सौराहारझरीसहोदरपरीपाकेन लोकोत्तरम्।
भक्त्या शीलयतस्सुशीलजनतोत्तंसं पदाब्जद्वयं नित्यं चिन्तय चित्त! सादरभरं सौम्योपयन्तुर्मुनेः॥४१॥

भूतार्थस्वोक्तिसन्दर्शितनिगमशिखागूढतत्त्वार्थजाते भूताख्ये योगिवर्ये भगवति सततं भक्तिनो लग्नचित्तम्।
सेवस्व स्वान्त! कान्तं निरवधिकगुणैः क्षान्तिकारुण्यमुख्यैः कान्तं जामातरं तं निरवधिकगुणास्वादमुक्तान्यसङ्गम्॥

महदाह्वयपादपद्मयोर्महदुत्तंसितयोर्मधुव्रतम्। वरयोगिनमेव सादरं मतिरासीदतु मामिकाऽन्वहम्॥ ४३॥

श्रीविष्णुचित्तपदपद्मरजोनुषङ्गात् चित्तं यदीयमरजस्कतया समिन्धे।
अव्याजवत्सलतया प्रथितस्सदाऽस्मानव्यात्स सुन्दरवरो मुनिसार्वभौमः॥ ४४॥

क्षीरं शर्करयेव यद्विहितया साभिख्यया व्याख्यया श्रीगोदागुरुभारती सुमहिता पुष्णाति सा माधुरीम्।
तस्य श्रीपदपद्मयुग्ममनिशं कान्तोपयन्तुर्मुनेस्स्मारंस्मारमहं विधूतदुरितो यायामनायासतः॥ ४५॥

यत्कृतान्मङ्गलाशासनादन्वहं मङ्गलानि श्रियो वल्लभो विन्दति।
तस्य गोदागुरोर्मङ्गलाशासनं कुर्वते स्यान्महायोगिने मङ्गलम्॥ ४६॥

क्षोणीसारपुरीकृतावतरणे स्वीयोक्तिसन्दर्शिताशेषाम्नायशिरोरहस्यनिकरे श्रीभक्तिसारे मुनौ।
भक्त्या भूषितमानसे वरमुनौ भक्तिं परां बिभ्रतो भक्त्या नित्यमुपासिषीय विलसत्तद्भक्तिधन्यानहम्॥ ४७॥

यच्चित्तं रघुशेखराङ्घ्रिकमलद्वन्द्वैकबन्दीकृतं तस्य श्रीकुलशेखरस्य पदयोस्सूक्तौ च सक्ताशयम्।
तद्वद्रङ्गभुजङ्गपुङ्गवगिरिप्रेमानुविद्धाशयं चेतः कान्तवरं विभावय सदा योगीश्वरं सादरम्॥ ४८॥

श्रीरङ्गाधिपदिव्यमङ्गलवपुस्सौन्दर्यसारामृतस्रोतोमग्नमुनीन्द्रवाहनगुणोदन्वन्निमग्नाशयम्।
चेतः कान्तवरं विचिन्तय मुनिं यच्चिन्तनं सन्ततं कुर्वन्तो हि विदन्ति दैवमपरं सन्तो न यस्मात्परम्॥ ४९॥

यत्पादरेणुवहनेन सुगन्धमौलिस्तं ब्रह्मबन्धमधिगच्छति मुक्तिबन्धः।
तद्विष्णुभक्तपदरेणुमुनीन्द्रभक्तं कान्तोपयन्तृमुनिमन्वहमाश्रयेयम्॥ ५०॥

यत्पादुकात्वमधिगच्छति संयमीन्द्रः तस्मिन्मुनौ वकुलमालिनि बद्धभावम्।
तत्सूक्तिसागरचतुष्टयपूर्णचन्द्रं सौम्योपयन्तृयमिनं शरणं वृणेऽहम्॥ ५१॥

मूर्तौ यो भक्तिभूमा मुररिपुपदयोर्यन्महिम्नः कलाऽपि व्यासादीनामलभ्या भुजगविहगराट्सैन्यभृद्विस्मयाय ।
यत्सूक्तीनां गरिम्णे स्पृहयति सकलोऽप्यागमोऽपौरुषेयस्तस्मिन् न्यस्तात्मभारश्शठजिति वरयोग्यस्तु मे स्वस्ति भूम्ने ॥

शठारातिश्रीमद्वदनसरसीजातमिहिरस्तदीयश्रीपादाम्बुजमधुकरस्तस्य वचसाम् ।
चतुर्णां सिन्धूनाममृतकिरणो भक्तजनतासुरद्रुः पायान्मां वरमुनिवरोऽवेलमहिमा ॥ ५३ ॥

शठरिपुमुनिदृष्टाम्नायगूढार्थतत्त्वप्रकटनपटुलोकाचार्यसूक्त्यर्थजातम् ।
व्यवृणुत भवभाजां गुप्तये यः कृपावान् भवतु स वरयोगी श्रेयसे भूयसे नः ॥ ५४ ॥

तादृक्कूकेसरभूषदृष्टचतुराम्नायाङ्गषट्कात्मकस्वोक्त्यानन्दितकेशवः किल कलिप्रध्वंसियोगीश्वरः ।
नित्योद्बुद्धयदीयहृत्सरसिजे पुष्णाति हंसश्रियं स श्रेयांसि तनोतु नः प्रतिकलं कान्तोपयन्ता मुनिः ॥ ५५ ॥

स्वकरलसच्छितामकरवालजिताब्धिसुतादयितहृतानपायनिगमान्तनिगूढधनम् ।
कलिरिपुयोगिवर्यमनिशं हृदये निदधन्मनसि विहारमेतु सततं मम कान्तवरः ॥ ५६ ॥

यद्धस्तन्यस्तशस्त्रं शकलयति कलिं यस्य सारस्वतं तु स्रोतः श्रोतॄनशेषानपि सपदि हताशेषतापान्विधत्ते ।
तस्मिन्निर्धूततिष्ये जगदधिपधनस्तेयनिस्तुल्यभूम्नि न्यस्तात्मा स्वस्ति विस्तारयतु मम सदा सौम्यजामातृयोगी ॥ ५७॥

यद्वाणी रसभूमदारितसुधावेणी मुदा संयमिक्षोणीपालमुखैस्तदन्यविमुखैरास्वाद्यते सादरम् ।
वेदान्तस्पृहणीयवैभववती खेदान्तकृद्देहिनां गोदां तां शरणं श्रयन् वरवरो मोदाय नः कल्पताम् ॥ ५८ ॥

यत्सूक्तिर्मुक्तिहेतुं प्रकटयतितरामागमान्तातिरूढं लक्ष्मीकान्तानुवादं स्फुरदमितगुणाचार्यवर्याभिधानम् ।
गोदां तामादरेण प्रणिदधति वरे योगिनि न्यस्तचित्तास्सन्तस्सन्तोषवन्तो विदधति भजतां स्वान्तसन्तापशान्तिम् ॥

यन्मौलिस्पर्शदीव्यत्परिमलभरितां मालिकां मूर्ध्नि बिभ्रद्धन्यं स्वं मन्यते श्रीनिधिरपि पुरुषस्तामसेयानुभावाम् ।
गोदां भक्त्या यतिक्ष्मापतिमिव सततं लालयन्तं महान्तं सेवन्ते योगिनं ये हृदय! कलय तानन्वहं देशिकेन्द्रान् ॥

शठवैरिमुनेः परं न दैवं विदितं येन तदेकदैवतेन । मधुरं कविमाश्रितस्तमीड्यं वरयोगी विदधातु भावुकं नः॥६१॥

यत्पादाब्जानुबन्धस्सकलतनुभृतां कल्पते मुक्तिसिद्ध्यै यत्सम्बन्धात्करस्थाममनुत स यतिक्ष्मापतिस्स्वस्य मुक्तिम् ।
तस्मिन्कूराधिनाथे निरवधिकगुणे भक्तिमाम्रेडयन्तं मुक्त्यै भक्त्या भजन्तो वरमुनिमनघा देशिका मे दयन्ताम् ॥६२॥

यतिपतिपदयुग्मं दैवतं यस्य नान्यत्तमिह वटुकपूर्णं सादरं भावयन्तम् ।
सततमभिलषन्तं तस्य निष्ठां गरिष्ठां वरवरमुनिवर्यं सन्ततं चिन्तयेयम् ॥ ६३ ॥

शठरिपुमुनिदृष्टसामवेदं व्यवृणुत यो यतिराजशासनेन । तमिह शठजिदाह्वयं श्रयन्तं वरमुनिवर्यमुपासिषीय नित्यम् ॥

शठारिदृष्टवेदमौलिभावसम्प्रकाशकृत्कृतेतरोक्तिमौलिवेद्ययोगिशेखरे सदा ।
शमादिसद्गुणोदधौ निमज्जतीव यस्य धीर्वरोपयन्तृयोगिनं निरन्तरं तमाश्रये ॥ ६५ ॥

ततमधुरगभीरद्राविडाम्नायभाष्यं यदुदितमिह सन्तः सन्ततं शीलयन्ति ।
स हि विहरति कृष्णो देशिको यस्य चित्ते स दिशतु वरयोगी भद्रमव्याहतं नः ॥ ६६ ॥

सुधासिन्धोरिन्दोस्सुहृदतिगभीरं सुमधुरं यदुक्तं भाष्यं तच्छठजिदुदिताम्नायशिरसः ।
स कृष्णार्यः पुष्णन् हृदि विहरणं यस्य जयति श्रियं सन्तन्यान्मे वरमुनिवरस्स प्रतिदिनम् ॥ ६७ ॥

निखिलनिगममौलिसारसारं प्रथयति यद्द्रविडागमान्तभाष्यम् ।
तदिह जयति यत्प्रसादशीतं हृदय ! सदा वरयोगिनं भजस्व ॥ ६८ ॥

सुधासाराकारं सकलनिगमान्तार्थमुकुरं यदुक्तं तत्पराङ्कुशनिगमभाष्यं शरणयन् ।
समिन्धे यत्सङ्गस्स विहरति कृष्णो गुरुवरस्सदा यच्चित्ते तं वरवरमुपासे मुनिवरम् ॥ ६९ ॥

सर्वज्ञेन धृता हि येन शिरसा सा कृष्णपादोद्भवा श्रीपराङ्कुशवेदमौलिविवृतिस्स्वर्वाहिनीसोदरी ।
तापं सर्वमपाकरोति भविनां धत्ते परां निर्वृतिं सेवे तस्य पदाब्जयुग्ममनिशं सौम्योपयन्तुर्मुनेः ॥ ७० ॥

शठरिपुनिगमार्थतत्त्वबोधं जनयति यः किल वादिसिंहघोषः । वरवरमुनिवर्यमाश्रये तत्प्रवणधियं प्रशमादिसद्गुणाढ्यम् ॥

सरःप्रमुखदिव्यसूर्युदितदिव्यसूक्त्याशयप्रकाशनसमुद्भवानितरलभ्यकीर्त्युज्ज्वलम् ।
गुरुं हृदि विभावयन्वरमुनिर्हि कृष्णाह्वयं मदीयहृदये सदा सकरुणं विधत्तां स्थितिम् ॥ ७२ ॥

रहस्यत्रयाख्यं जकद्देशिकोक्तं रहस्यत्रयान्तर्गतार्थप्रदीपम् ।
विवव्रे जगद्भूतये यः कृपाब्धिः स नः पातु रम्योपयन्ता मुनीन्द्रः ॥ ७३ ॥

श्रीमल्लोकगुरूदिता श्रुतिशिरस्सिद्धान्तसञ्जीविनी सा तत्त्वत्रितयाह्वया किल कृतिर्यद्व्याख्ययाऽलङ्कृता ।
श्लाघालोलफणीन्द्रमौलिविलसद्रत्नांशुनीराजिता पायान्नस्सततं स सुन्दरवरो योगी गुणैस्सुन्दरः ॥ ७४ ॥

श्रुतिस्मृतिसरोमुनिप्रभृतिसूरिसूक्तिस्फुरत्प्रसूनरचितातुलानघवरार्यसूक्तिस्रजः ।
बिभर्ति शुभसौरभश्रियमुदारयद्भारती स मे दिशतु सुन्दरो वरमुनिश्शुभं शाश्वतम् ॥ ७५ ॥

जगद्गुरुवरानुजप्रथितचित्रगुर्वाशयाभिधानकृतिसम्प्रकाशनपटीयसी यत्कृतिः ।
अनन्यसुलभा व्यनक्त्यनघशेमुषीनैपुणीं स मे वरवरो मुनिर्वितरतु श्रियं भूयसीम् ॥ ७६ ॥

कृत्वाऽनेकान्यहान्यप्रतिमनयमहाशास्त्रसम्पातघोरं तत्तादृग्वादयुद्धं यतिपतिरनयद्यं विजित्य स्वपक्षम् ।
तत्प्रोक्तं ज्ञानसारं व्यवृणुत किल यो मेयसारं च सम्यक् तस्मै नित्यं नमस्स्याद्वरवरमुनये निस्तुलोदारभूम्ने ॥ ७७ ॥

प्रपन्नानां गायत्र्यमृतकविदृष्टा यतिपतिस्तुतिर्यद्व्याख्याता प्रजनयति सत्त्वोत्तरमुदम् ।
अजस्रं नः पायाद्वरमुनिवरश्शीलकरुणाक्षमावात्सल्याद्यैरनवधिगुणौघैस्स मधुरः ॥ ७८ ॥

विष्णोर्यद्दर्शनार्चासरणिमनुसरन्नर्चनं सत्त्वभाजां सङ्गस्सर्वोऽपि कुर्वन्जयति गुणनिधिस्तत्कटाक्षैकपात्रम् ।
तस्मात्कान्तोपयन्तुः प्रणतजननिधेः श्रीमतो देशिकेन्द्रात् नाहं नाहं न जाने परमिह शरणं दैवतं नैव जाने ॥ ७९ ॥

श्रीमत्कान्तवरस्य देशिकवरस्याङ्घ्री सरोजोपमौ संसारार्णवमग्नसर्वजनतासन्तारणैकव्रतौ ।
ये ध्यायन्ति सदा तदन्यविमुखास्तद्दर्शिते सत्पथे निष्ठां बिभ्रति सद्गुणैस्सुरभितास्तेभ्यो महद्भ्यो नमः ॥ ८० ॥

यदुदिता यतिभूपतिविंशतिस्समवधीरितशीधुसुधारसा । विशदयत्यखिलं भविनां हितं वरमुनिस्स तनोतु शुभानि नः ॥

महायोगी वक्ताऽनितरगुणसामान्यमहिमा स तु स्तुत्यः श्रीमान् अमितगुणभूमा यतिपतिः ।
अतो निस्तुल्या सा यतिनरपतेर्विंशतिरिति व्यवस्यन्तस्सन्तः कलिमिह जयन्त्युज्ज्वलधियः ॥ ८२ ॥

द्राक्षामधिक्षिपति निन्दति माकरन्दधारां सुधारसझरीमवरीकरोति ।
यत्संप्रणीतमतुलं यतिसार्वभौमस्तोत्रं स मे वरमुनिर्वितनोतु भद्रम् ॥ ८३ ॥

श्रीमद्रङ्गसुधाभिधानकविसूक्त्यर्थानुसन्धोज्ज्वला गोदोदारवचःप्रदर्शितगुरूपायत्वनिष्ठाश्रया ।
यत्सूक्तिर्यतिराजविंशतिनुतिर्वेदान्तसिन्धोस्सुधा श्रीमद्रम्यवराय संयमवतां नाथाय तस्मै नमः ॥ ८४ ॥

यतिवरभक्तिपूर्तिकलितानिंसमाह्वययत्कृतिरसवेदिनः किल तरन्ति भवार्त्युदधिम् ।
तमनुदिनं यतीन्द्रपदपङ्कजभृङ्गवरं वरमुनिमाश्रयाशय! विहाय तदन्यरुचिम् ॥ ८५ ॥

शठारिदृष्टसामवेदभाष्यदर्शिताखिलप्रमाणसङ्ग्रहो महोपकारको मनीषिणाम् ।
मुदं तनोति यत्कृतिस्समाश्रयस्व सादरं मनोहरोपयन्तृयोगिनं तमन्वहं मनः ॥ ८६ ॥

स्वकृतजगद्गुरुतत्त्वत्रितयव्याख्यानमानसङ्ग्रहतः । भविनां कृतोपकारो वरयोगी पातु नस्सततम् ॥ ८७ ॥

यदीययोपदेशरत्नमालया परिष्कृता यदङ्घ्रिपद्मशेखरा जयन्ति देशिकोत्तमाः ।
तमाश्रितस्य सुन्दरोपयन्तृयोगिशेखरं भवार्णवोऽपि गोष्पदत्वमेति तत्प्रभावतः ॥ ८८ ॥

शठारिदृष्टसामवेदमौलिसङ्ग्रहात्मिकां यदुक्तिमन्वहं गृणन् विमुक्तिसम्पदास्पदम् ।
समेधते सतां गणस्स नश्शुभानि सादरं वरोपयन्तृयोगिराट् तरङ्गयत्वनारतम् ॥ ८९ ॥

दुग्धोदन्वद्धवलमधुरं शुद्धसत्त्वैकरूपं रूपं यस्य स्फुटयतितरां यं फणीन्द्रावतारम् ।
ध्यायन्तस्तं वरवरमुनिं केऽपि धन्या महान्तः कालं सर्वं कलुषरहिता हृष्टचित्ता हरन्ति ॥ ९० ॥

राजच्छीतमयूखमण्डलशरज्ज्योत्स्नासनाभिद्युतिः काषायाम्बरधारिणी करलसद्दण्डत्रयीमण्डिता ।
फालाद्यङ्गसमुल्लसत्सुविमलस्निग्धोर्ध्वपुण्ड्रोज्ज्वला दीव्यन्त्यात्मगुणैस्सदा वरवराकाराऽस्तु मे भावना ॥

चिन्ता मे यतिसार्वभौमचरणप्रेमात्मिका प्रोल्लसच्छान्तिक्षान्तिदयादिसद्गुणमयी राकेन्दुभासां निधिः ।
श्रीमत्स्वाङ्घ्रिसरोजभक्तजनतामोक्षप्रदानोद्यता भूयात्सर्वजगद्धितावतरणा सौम्योपयन्त्रात्मिका ॥ ९२ ॥

अङ्घ्री शृङ्खलिताब्जकीर्तिविभवौ तन्नालदम्भच्छिदौ जङ्घे हस्तिकरप्रशस्तिहरणोन्निद्रं तदूरुद्वयम् ।
मध्यं तानवहृद्यमायतभुजामध्यं कवाटोपमं बाहुद्वन्द्वममर्त्यभूजविटपाहङ्कारपाटच्चरम् ॥ ९३ ॥

कण्ठं कुण्ठितकम्बुडम्बरभरं वक्त्रं शरच्चन्द्रमस्सौन्दर्योदितगर्वचर्वणकलापाण्डित्यनित्योज्ज्वलम् ।
मौलिं निस्तुलमप्यपास्तभजदातङ्कं वपुस्सादरं तत्क्षीरोदसहोदरं वरमुनेश्चेतस्सदा भावय ॥ ९४ ॥

पुण्ड्रैर्द्वादशभिर्यथाविधि धृतैश्शुभ्रैरदभ्रच्छविस्तत्तादृक्छरदम्बुवाहपटलीसौन्दर्यसम्पन्निधिः ।
धीभक्त्यादिगुणौघसम्भृतयशस्सन्दोहसन्देहदा मूर्तिस्सा वरयोगिनः प्रतिकलं जागर्तु चित्ते मम ॥ ९५ ॥

यन्मूर्तिध्यानमार्तिं शमयति भविनां ज्ञप्तिपूर्वं विधत्ते भक्तिं पुष्णाति विष्णौ विषयविषयिणीमाशु मुष्णाति तृष्णाम् ।
सोऽयं कान्तोपयन्ता निरवधिकगुणस्तोमविस्तारिकीर्तिः स्वर्गङ्गोत्तुङ्गवीचिप्रशमितजगतीविश्वतापोऽवतान्नः ॥ ९६ ॥

मातर्वाणि! निरन्तरं कथय तान् कान्तोपयन्तुर्गुणानन्तर्वाणिवरैर्वरप्रदरमावासार्यमुख्यैर्नुतान् ।
पादौ तस्य करद्वयार्चय भवातङ्कापवादौ सदा तद्भक्ताननुचिन्तयाशय! तमोवैदेशिकान् देशिकान् ॥ ९७ ॥

अज्ञानामहमग्रणीरथ च मां मन्ये भृशं पण्डितं पापीयानपि पापलेशरहितं हा! निश्चिनोमि स्वयम् ।
भास्वत्कर्मविदेशगोऽपि कलये सत्कर्मनिष्ठं हृदा धिङ्मां नाथ महामुने! तदधुना त्रातुं त्वमेव क्षमः ॥ ९८ ॥

नाहं सत्कर्म कर्तुं पटुरपटुतरस्साङ्ख्ययोगं विधातुं नैव ध्यातुं परस्मात्परममनुपमं धाम भूमानिधानम् ।
नैव न्यस्यामि तस्मिन् भरमनधिगमात्तत्र विश्वासभूम्नो भक्तेस्तस्मादुपायो वरमुनिवर! मे त्वत्कृपैवानपाया ॥ ९९ ॥

त्वत्सूक्त्येकरसांस्त्वदङ्घ्रियुगलन्यस्तात्मरक्षाभरान् त्वत्सेवैकपरांस्त्वदीयकरुणास्रोतस्विनीसागरान् ।
आचार्यान् मम वीक्ष्य मय्यपि भृशं निस्सीमदोषास्पदे श्रीमन् रम्यवर! प्रसीद यमिनां राजन्! नमस्ते नमः ॥

श्रीमते सौम्यजामातृमुनीन्द्राय महात्मने । श्रीरङ्गवासिने भूयान्नित्यश्रीर्नित्यमङ्गलम् ॥

इति श्रीवादिभीकरार्यविरचितं श्रीवरवरमुनिशतकं समाप्तम् ॥

---

श्रीवादिभीकरगुरुभिरनुगृहीतं

## ॥ श्रीवरवरमुनिसुप्रभातम् ॥

वेदान्तदेशिककटाक्ष + + परवादिभयङ्करार्यम् ॥

रविरुदितस्त्वथापि न विनश्यति मे तिमिरं विकसति पङ्कजं हृदयपङ्कजमेव न मे ।
वरवरयोगिवर्य! वरणीय! दयैकनिधे! जयजय देव जागृहि जनेषु निधेहि धियम् ॥ १ ॥

स्वपनमिदं तव स्वमहिमानुभवैकरसं तदपि तथाविधं तदिति जातु न वेत्ति जनः ।
वरवरयोगिवर्य! तदिदं विजहातु भवान् अपरिमितं हितं त्रिजगतामनुचिन्तयितुम् ॥ २ ॥

अवतरणं तदेव जगतामविवेकभृतां विविधहितावबोधनकृते हि कृतं भवता ।
तत इत एहि योगशयनान्मम नाथ! जनान् अमृतमयैरपाङ्गवलयैरभिषेचयितुम् ॥ ३ ॥

शरदरविन्दबृन्दसुषमापरिपोषजुषा तव नयनेन केचन परे चरणेन तथा ।
मधुरगभीरधीरचतुरैरुदितैरितरे वरद! धुरं धरन्ति भवसिन्धुममुं तरितुम् ॥ ४ ॥

परमनभोनिवास! फणिपुङ्गव! रङ्गपतेः भवनमिदं हिताय जगतो भवताऽधिगतम् ।
तदपि सदैव देव! नृगतिं प्रकटीकुरुषे तदिह महत् तवैव कुरु वैभवबुद्धिदुरम् ॥ ५ ॥

त्वदभिमतप्रियस्त्वदनुवर्तनधन्यतमात् अलमतिरिक्त इत्यखिललोकसुबोधमिदम् ।
अवनितलं त्वदीप्सितमिदं च हि तत्र वसन् अयमखिलस्तदैव निरुपायमुपैति पदम् ॥ ६ ॥

इति श्रीवरवरमुनिसुप्रभातं समाप्तम् ॥

श्रीवादिभीकरगुरुभिरनुगृहीतं

## ॥ श्रीरामानुजसुप्रभातम् ॥

वेदान्तदेशिककटाक्ष + + परवादिभयङ्करार्यम् ॥

जयजय यतिसार्वभौमामलस्वान्त! तुभ्यं नमः जयजय जनिसिन्धुमग्नात्मसन्तारकग्रामणीः ।
जयजय भजनीय कूरेशमुख्यैः प्रसीद प्रभो! जयजय विदुषां निधे! जागृहि श्रीनिधे! जागृहि ॥ १ ॥

पूर्णार्यपूर्णकरुणापरिलब्धबोध! वैराग्यभक्तिमुखदिव्यगुणामृताब्धे! ।
श्रीयामुनार्यपदपङ्कजराजहंस! रामानुजार्य! भगवन्! तव सुप्रभातम् ॥ २ ॥

आनेतुमद्य वरदस्य गजाद्रिभर्तुः पानीयमच्छमतिशीतमगाधकूपात् ।
ध्वान्तं निरस्तमरुणस्य करैस्समन्तात् रामानुजार्य! भगवन्! तव सुप्रभातम् ॥ ३ ॥

श्रीरङ्गराजपदपङ्कजयोरशेषकैङ्कर्यमाकलयितुं सकुतूहलस्त्वम् ।
उत्तिष्ठ नित्यकृतिमप्यखिलां च कर्तुं रामानुजार्य! भगवन्! तव सुप्रभातम् ॥ ४ ॥

त्वां वीक्षितुं समुपयाति वृषाचलेन्द्रः त्वत्संप्रक्लृप्तवरशङ्खरथाङ्गपाणिः ।
संयोजितामुरसि मां भवतैव बिभ्रत् रामानुजार्य! भगवन्! तव सुप्रभातम् ॥ ५ ॥

श्रीमत्कुरङ्गपरिपूर्णविभुस्त्वदुक्तं श्रीभाष्यशास्त्रममलं त्वयि भक्तियुक्तः ।
श्रोतुं समिच्छति यतीन्द्र! सितोर्ध्वपुण्ड्रः तं बोधयार्थमखिलं तव सुप्रभातम् ॥ ६ ॥

श्रीभाष्यमालिखितुमात्तविशाललेख्यः श्रीवत्सचिह्नगुरुरानतदिव्यगात्रः ।
वेदान्तसूत्रमपि वक्तुममुष्य सर्वम् उत्तिष्ठ लक्ष्मणमुने! तव सुप्रभातम् ॥ ७ ॥

श्रीमान् स पूर्णवटुरादरतः प्रगृह्य श्रीपादुकां यतिपते! पदयोः प्रयोक्तुम् ।
द्वारि स्थितिं वितनुते प्रणतार्तिहारिन्! रामानुजार्य! भगवन्! तव सुप्रभातम् ॥ ८ ॥

काषायवस्त्रकटिसूत्रकमण्डलूंश्च श्रीदन्तकाष्ठमपि देशिकसार्वभौमाः ।
पाणौ निधाय निवसन्ति विशुद्धगात्राः रामानुजार्य! भगवन्! तव सुप्रभातम् ॥ ९ ॥

त्वां बोधयन्ति गुरवः प्रथिता महान्तः श्रीवैष्णवाश्च यमिनस्तव पादभक्ताः ।
एकान्तिनश्च विमलास्त्वदनन्यभावाः तान् पालयाद्य यतिशेखर! सुप्रभातम् ॥ १० ॥

ब्राह्मे प्रबुद्ध्य विबुधाः स्वगुरून् प्रणम्य रामानुजाय नम इत्यसकृद्‌ब्रुवाणाः ।
अष्टाक्षरं सचरमं द्वयमुच्चरन्ति रामानुजार्य! भगवन्! तव सुप्रभातम् ॥ ११ ॥

प्रातः पठन्ति परमद्रविडप्रपन्नगायत्रिमन्त्रशतमष्टशिरस्कमच्छम् ।
श्रीवैष्णवास्तव पदाब्जनिविष्टभावाः रामानुजार्य! भगवन्! तव सुप्रभातम् ॥ १२ ॥

आराधनं रचयितुं कमलासखस्य श्रीयादवाचलपतेर्विविधोपचारैः ।
पातुं च दृष्टिकमलेन नतानशेषान् रामानुजार्य! भगवन्! तव सुप्रभातम् ॥ १३ ॥
संसेव्य! सप्तशतसंयमिसार्वभौमैः सद्देशिकैस्सकलशास्त्रविदां वरिष्ठैः ।
एकान्तिभिः परमभागवतैर्निषेव्य! रामानुजार्य! भगवन्! तव सुप्रभातम् ॥ १४ ॥
गद्यत्रयं निगमशेखरदीपसारौ वेदार्थसंग्रहमपि प्रथितं च नित्यम् ।
गीतार्थभाष्यमपि देशिकपुङ्गवानां दातुं प्रसीद यतिशेखर! सुप्रभातम् ॥ १५ ॥
पादाम्बुजं यतिपते! शरणं विहर्तुं संगत्य संसरणवारिधिलङ्घनोत्काः ।
आयान्ति हस्तकमलाभिधृतोपचाराः तान् पाहि ते करुणया तव सुप्रभातम् ॥ १६ ॥
स्नातुं कवेरतनयासलिलेषु शिष्यैः आचार्यपूरुषवरैर्यतिभिर्विशुद्धैः ।
श्रीवैष्णवैश्च सह सेव्य! महानुभावैः रामानुजार्य! भगवन्! तव सुप्रभातम् ॥ १७ ॥
रामानुजार्य! रमणीयगुणाभिराम! रागादिदूरग! गुरो! गुरुसार्वभौम! ।
सत्त्वप्रधान! शरणागतवत्सल! त्वत्पादाब्जयोरिह परत्र च किंकरः स्याम् ॥ १८ ॥

इति श्रीरामानुजसुप्रभातं समाप्तम् ॥

## ॥ श्रीभाष्यकारमङ्गलम् ॥

श्रीपराङ्कुशपादाब्जसुरभीकृतमौलये । श्रीवत्सचिह्ननाथाय यतिराजाय मङ्गलम् ॥ १ ॥
नाथपद्माक्षरामार्यपादपङ्कजसेविने । सेव्याय सर्वयमिनां यतिराजाय मङ्गलम् ॥ २ ॥
पूर्णार्यपूर्णकरुणापात्रायामिततेजसे । मालाधरप्रियायास्तु यतिराजाय मङ्गलम् ॥ ३ ॥
संसेव्य यामुनाचार्यम् एकलव्योऽस्म्यहं गुरोः । इत्येवं वदते नित्यं यतिराजाय मङ्गलम् ॥ ४ ॥
श्रीकाञ्चीपूर्णमिश्रोक्तरहस्यार्थविदे सदा । देवराजप्रियायास्तु यतिराजाय मङ्गलम् ॥ ५ ॥
श्रीमद्गोष्ठीपुरीपूर्णदिव्याज्ञां कुर्वते मुदा । श्लोकार्थं गृह्णते तस्मात् यतिराजाय मङ्गलम् ॥ ६ ॥
कूरेशकुरुकानाथदाशरथ्यादिदेशिकाः । यच्छिष्या भान्ति ते तस्मै यतिराजाय मङ्गलम् ॥ ७ ॥
चरमश्लोकतत्त्वार्थं ज्ञात्वाऽऽर्याज्ञां विलङ्घ्य च । दिशते तं स्वकीयेभ्यः यतिराजाय मङ्गलम् ॥ ८ ॥
श्रीशैलपूर्णकृपया श्रीरामायणमर्थतः । भक्त्या येन श्रुतं तस्मै यतिराजाय मङ्गलम् ॥ ९ ॥
शङ्करादिकुदृष्टीनां बाह्यानां निधनाय च । श्रीभाष्यं कुर्वते तस्मै यतिराजाय मङ्गलम् ॥ १० ॥
कुर्वन्नुपनिषद्भाष्यं जगद्रक्षां करोति यः । दयायाः परतन्त्राय भाष्यकाराय मङ्गलम् ॥ ११ ॥
द्रमिडोपनिषद्व्याख्यां कलयेति कृपाबलात् । शासते कुरुकेशं तं भाष्यकाराय मङ्गलम् ॥ १२ ॥

गत्वा तु शारदापीठं वृत्तिं बोधायनस्य च । अवलोक्यागतायास्तु भाष्यकाराय मङ्गलम् ॥ १३ ॥

परमाणुमृषावादिवादिसंहारकारिणे । तस्मै भगवते श्रीमद्भाष्यकाराय मङ्गलम् ॥ १४ ॥

श्रीमत्कुरङ्गपूर्णाय श्रीभाष्यं वदते स्वयम् । पित्रे संपत्सुतस्यापि भाष्यकाराय मङ्गलम् ॥ १५ ॥

दत्त्वा वृषगिरीशस्य शङ्खचक्रे रमापतेः । परमप्रीतियुक्ताय भाष्यकाराय मङ्गलम् ॥ १६ ॥

संन्यासं कुर्वते काञ्च्याम् अनन्तसरसीतटे । वरदे न्यस्तभाराय भाष्यकाराय मङ्गलम् ॥ १७ ॥

श्रीमन्महाभूतपुरे श्रीमत्केशवयज्वनः । कान्तिमत्यां प्रसूताय यतिराजाय मङ्गलम् ॥ १८ ॥

शेषो वा सैन्यनाथो वा श्रीपतिर्वेति सात्त्विकैः । वितर्क्याय महाप्राज्ञैः यतिराजाय मङ्गलम् ॥ १९ ॥

प्रकृष्टगुणपूर्णाय प्राप्याय स्वाङ्घ्रिसेविनाम् । प्रपन्नसार्थवाहाय यतिराजाय मङ्गलम् ॥ २० ॥

वेदात्मकप्रमाणेन सात्त्विकैश्च प्रमातृभिः । प्रमेयेण सह श्रीमान् वर्धतां यतिशेखरः ॥ २१ ॥

इति श्रीभाष्यकारमङ्गलं समाप्तम् ॥

श्रीवादिभीकरगुरुभिरनुगृहीतं

## ॥ श्रीरङ्गराजसुप्रभातम् ॥

वेदान्तदेशिककटाक्ष × × परवादिभयङ्करार्यम् ॥

श्रीरङ्गभूमितलभूसुरदेशिकेन्द्रैः श्रीरङ्गवाटमिदमित्युदितैः प्रबोधैः ।
श्रीभूमिपाणिकमलैश्च समाश्रिताङ्घ्रे ! श्रीरङ्गराज ! जगदीश्वर ! सुप्रभातम् ॥ १ ॥

कस्तूरिकाकलिकया कलितालकस्य कन्दर्पकोटिसदृशस्य कृपाम्बुराशेः ।
कल्याणभूमिधरकाङ्क्षितधैर्यसिन्धो ! श्रीरङ्गराज ! जगदीश्वर ! सुप्रभातम् ॥ २ ॥

लीलाविशेषललिताललितेन्दिरायाः माला कवेरतनयामणिरेव साक्षात् ।
श्रीरङ्गराडिति जना निगदन्ति सर्वे श्रीरङ्गराज ! जगदीश्वर ! सुप्रभातम् ॥ ३ ॥

जम्बूद्रुमादिवसतेश्शशिराजमौलेः संभूतनिर्जरनदीहतकल्मषस्य ।
उद्दीपनं वितनुते तव पादसेवा श्रीरङ्गराज ! विजयिन् ! तव सुप्रभातम् ॥ ४ ॥

श्रीरङ्गराजभवने भुवनैकमान्ये सीताकराम्बुरुहसेव्यतयाऽतिधन्ये ।
याने विमानशयने वरवेदशृङ्गे श्रीरङ्गराज ! जगदीश्वर ! सुप्रभातम् ॥ ५ ॥

श्रीचन्द्रपुष्करिणिकासरसः प्रतीरे श्रीवृक्षमूलकमलाक्षकटाक्षपूरे ।
श्रीसह्यजावरविभूषण ! दिव्यमूर्ते ! श्रीरङ्गराज ! जगदीश्वर ! सुप्रभातम् ॥ ६ ॥

सूर्येन्दुमण्डलमृगेन्द्रसुपर्णशेषवालाभिवर्यगजवाजिरथप्रधानैः ।
दिव्यैर्विमानशयने दययात्तनाथ! श्रीरङ्गराज! जगदीश्वर! सुप्रभातम् ॥ ७ ॥
लक्ष्मीश! केशव! हरे! नृहरे! मुरारे! शौरे! रमारमण! कारण! दीनबन्धो! ।
इत्यादरेण वदतामिह वाञ्छितार्थ! श्रीरङ्गराज! जगदीश्वर! सुप्रभातम् ॥ ८ ॥
श्रीसुप्रभातविनुतं सुकृताभिधेयं प्रातस्समाहितमतिर्य इदं पठेत्तु ।
तस्मै भुजङ्गशयनो भुवि रङ्गनाथः सर्वाणि वाञ्छितफलानि सदा प्रसूते ॥ ९ ॥

इति श्रीरङ्गराजसुप्रभातं समाप्तम् ॥

श्रीवादिभीकरगुरुभिरनुगृहीतं

## ॥ श्रीवेङ्कटेशसुप्रभातम् ॥

वेदान्तदेशिककटाक्ष + + परवादिभयङ्करार्यम् ॥

मातस्समस्तजगतां मधुकैटभारेः वक्षोविहारिणि! मनोहरदिव्यरूपे ।
श्रीस्वामिनि! श्रितजनप्रियदानशीले! श्रीवेङ्कटेशदयिते! तव सुप्रभातम् ॥ १ ॥
तव सुप्रभातमरविन्दलोचने! भवतु प्रसन्नमुखचन्द्रमण्डले! ।
विधिशङ्करेन्द्रवनिताभिवन्दिते! वृषशैलनाथदयिते! दयानिधे! ॥ २ ॥
अत्र्यादिसप्तऋषयस्समुपास्य सन्ध्याम् आकाशसिन्धुकमलानि मनोहराणि ।
आदाय पादयुगमर्चयितुं प्रपन्नाः शेषाद्रिशेखरविभो! तव सुप्रभातम् ॥ ३ ॥
पञ्चाननाब्जभवषण्मुखवासवाद्याः त्रैविक्रमादिचरितं विबुधाः स्तुवन्ति ।
भाषापतिः पठति वासरशुद्धिमारात् शेषाद्रिशेखरविभो! तव सुप्रभातम् ॥ ४ ॥
ईषत्प्रफुल्लसरसीरुहनारिकेलपूगद्रुमादिसुमनोहरपालिकानाम् ।
आवाति मन्दमनिलस्सह दिव्यगन्धैः शेषाद्रिशेखरविभो! तव सुप्रभातम् ॥ ५ ॥
उन्मील्य नेत्रयुगमुत्तमपञ्जरस्थाः पात्रावशिष्टकदलीफलपायसानि ।
भुक्त्वा सलीलमथ केलिशुकाः पठन्ति शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ६ ॥
तन्त्रीप्रकर्षमधुरस्वनया विपञ्च्या गायत्यनन्तचरितं तव नारदोऽपि ।
भाषासमग्रमसकृत्करचाररम्यं शेषाद्रिशेखरविभो! तव सुप्रभातम् ॥ ७ ॥
भृङ्गावली च मकरन्दरसानुविद्धझङ्कारगीतनिनदैः सह सेवनाय ।
निर्यात्युपान्तसरसीकमलोदरेभ्यः शेषाद्रिशेखरविभो! तव सुप्रभातम् ॥ ८ ॥

योषागणेन वरदध्नि विमथ्यमाने घोषालयेषु दधिमन्थनतीव्रघोषाः ।
रोषात्कलिं विदधते ककुभश्च कुम्भाः शेषाद्रिशेखरविभो! तव सुप्रभातम् ॥ ९ ॥

पद्मेशमित्र! शतपत्रगतालिवर्गाः हर्तुं श्रियं कुवलयस्य निजाङ्गलक्ष्म्या ।
भेरीनिनादमिव बिभ्रति तीव्रनादं शेषाद्रिशेखरविभो! तव सुप्रभातम् ॥ १० ॥

श्रीमन्नभीष्टवरदाखिललोकबन्धो! श्रीश्रीनिवास! जगदेकदयैकसिन्धो! ।
श्रीदेवतागृहभुजान्तर! दिव्यमूर्ते! श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ ११ ॥

श्रीस्वामिपुष्करिणिकाप्लवनिर्मलाङ्गाः श्रेयोऽर्थिनो हरविरिञ्चसनन्दनाद्याः ।
द्वारे वसन्ति वरवेत्रहतोत्तमाङ्गाः श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ १२ ॥

श्रीशेषशैलगरुडाचलवेङ्कटाद्रिनारायणाद्रिवृषभाद्रिवृषाद्रिमुख्याम् ।
आख्यां त्वदीयवसतेरनिशं वदन्ति श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ १३ ॥

सेवापराश्शिवसुरेशकृशानुधर्मरक्षोम्बुनाथपवमानधनाधिनाथाः ।
बद्धाञ्जलिप्रविलसन्निजशीर्षदेशाः श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ १४ ॥

धाटीषु ते विहगराजमृगाधिराजनागाधिराजगजराजहयाधिराजाः ।
स्वस्वाधिकारमहिमाधिकमर्थयन्ते श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ १५ ॥

सूर्येन्दुभौमबुधवाक्पतिकाव्यसौरिस्वर्भानुकेतुदिविषत्परिषत्प्रधानाः ।
त्वद्दासदासचरमावधिदासदासाः श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ १६ ॥

त्वत्पादधूलिभरितस्फुरितोत्तमाङ्गाः स्वर्गापवर्गनिरपेक्षनिजान्तरङ्गाः ।
कल्पागमाकलनयाऽऽकुलतां लभन्ते श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ १७ ॥

त्वद्गोपुराग्रशिखराणि निरीक्षमाणाः स्वर्गापवर्गपदवीं परमां श्रयन्तः ।
मर्त्या मनुष्यभुवने मतिमाश्रयन्ते श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ १८ ॥

श्रीभूमिनायक! दयादिगुणामृताब्धे! देवाधिदेव! जगदेकशरण्यमूर्ते! ।
श्रीमन्ननन्तगरुडादिभिरर्चिताङ्घ्रे! श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ १९ ॥

श्रीपद्मनाभ! पुरुषोत्तम! वासुदेव! वैकुण्ठ! माधव! जनार्दन! चक्रपाणे! ।
श्रीवत्सचिह्न! शरणागतपारिजात! श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ २० ॥

कन्दर्पदर्पहरसुन्दरदिव्यमूर्ते! कान्ताकुचाम्बुरुहकुड्मललोलदृष्टे! ।
कल्याणनिर्मलगुणाकर! दिव्यकीर्ते! श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ २१ ॥

मीनाकृते! कमठ! कोल! नृसिंह! वर्णिन्! स्वामिन्! परश्वथतपोधन! रामचन्द्र! ।
शेषांशराम! यदुनन्दन! कल्किरूप! श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ २२ ॥

एलालवङ्गघनसारसुगन्धितीर्थं दिव्यं वियत्सरसि हेमघटेषु पूर्णम् ।
धृत्वाऽद्य वैदिकशिखामणयः प्रहृष्टाः तिष्ठन्ति वेङ्कटपते! तव सुप्रभातम् ॥ २३ ॥

भास्वानुदेति विकचानि सरोरुहाणि संपूरयन्ति निनदैः ककुभो विहङ्गाः ।
श्रीवैष्णवाः सततमर्थितमङ्गलास्ते धामाश्रयन्ति तव वेङ्कट! सुप्रभातम् ॥ २४ ॥

ब्रह्मादयः सुरवराः समहर्षयस्ते सन्तस्सनन्दनमुखास्त्वथ योगिवर्याः ।
धामान्तिके तव हि मङ्गलवस्तुहस्ताः श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ २५ ॥

लक्ष्मीनिवास! निरवद्यगुणैकसिन्धो! संसारसागरसमुत्तरणैकसेतो! ।
वेदान्तवेद्यनिजवैभव! भक्तभोग्य! श्रीवेङ्कटाचलपते! तव सुप्रभातम् ॥ २६ ॥

इत्थं वृषाचलपतेरिह सुप्रभातं ये मानवाः प्रतिदिनं पठितुं प्रवृत्ताः ।
तेषां प्रभातसमये स्मृतिरङ्गभाजां प्रज्ञां परार्थसुलभां परमां प्रसूते ॥ २७ ॥

इति श्रीवेङ्कटेशसुप्रभातं समाप्तम् ॥

श्रीवादिभीकरगुरुभिरनुगृहीतं

## ॥ श्रीवेङ्कटेशस्तोत्रम् ॥

वेदान्तदेशिककटाक्ष + + परवादिभयङ्करार्यम् ॥

कमलाकुचचूचुककुङ्कुमतः नियतारुणितातुलनीलतनो!। कमलायतलोचन! लोकपते! विजयी भव वेङ्कटशैलपते॥१॥
सचतुर्मुखषण्मुखपञ्चमुखप्रमुखाखिलदैवतमौलिमणे । शरणागतवत्सल! सारनिधे! परिपालय मां वृषशैलपते! ॥२॥
अतिवेलतया तव दुर्विषहैः अनुवेलकृतैरपराधशतैः। भरितं त्वरितं वृषशैलपते! परया कृपया परिपाहि हरे॥ ३ ॥
अधिवेङ्कटशैलमुदारमते! जनताभिमताधिकदानरतात् । परदेवतया गदितान्निगमैः कमलादयितान्न परं कलये॥४॥
कलवेणुरवावशगोपवधूशतकोटिवृतात् स्मरकोटिसमात्। प्रतिवल्लवि चाभिमतात् सुकृतात् वसुदेवसुतान्न परं कलये॥

अभिराम! गुणाकर! दाशरथे! जगदेकधनुर्धर! धीरमते! ।
रघुनायक! राम! रमेश! विभो! वरदो भव देव! दयाजलधे! ॥ ६ ॥

अवनीतनयाकमनीयकरं रजनीकरचारुमुखाम्बुरुहम्। रजनीचरराजतमोमिहिरं। महनीयमहं रघुराममये ॥ ७ ॥
सुमुखं सुहृदं सुलभं सुखदं सुगुणं च सुजायममोघशरम्। अपहाय रघूद्वहमन्यमहं न कथंचन कंचन जातु भजे॥

विना वेङ्कटेशं ननाथो न नाथः सदा वेङ्कटेशं स्मरामि स्मरामि ।
हरे वेङ्कटेश प्रसीद प्रसीद प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ ॥ ९ ॥

अहं दूरतस्ते पदाम्भोजयुग्मप्रणामेच्छयाऽऽगत्य सेवां करोमि ।
सकृत्सेवया नित्यसेवाफलं त्वं प्रयच्छ प्रयच्छ प्रभो! वेङ्कटेश! ॥ १० ॥

वृषशैलाधिप एव दैवतं नः वृषभाद्रीश्वर एव दैवतं नः । फणिशैलाधिप एव दैवतं नः भगवान् वेङ्कट एव दैवतं नः ॥
श्रीश्रीनिवासः परदैवतं नः श्रीश्रीनिवासः परमं धनं नः । श्रीश्रीनिवासः कुलदैवतं नः श्रीश्रीनिवासः परमा गतिर्नः ॥

अज्ञानिना मया दोषान् अशेषान् विहितान् हरे! । क्षमस्व त्वं क्षमस्व त्वं शेषशैलशिखामणे ॥ १३ ॥

इति श्रीवेङ्कटेशस्तोत्रं समाप्तम् ॥

श्रीवादिभीकरगुरुभिरनुगृहीता

## ॥ श्रीवेङ्कटेशप्रपत्तिः ॥

ईशानां जगतोऽस्य वेङ्कटपतेः विष्णोः परां प्रेयसीं तद्वक्षःस्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धिनीम् ।
पद्मालंकृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥ १ ॥

श्रीमन्! कृपाजलनिधे कृतसर्वलोक सर्वज्ञ शक्त नतवत्सल! सर्वशेषिन् ।
स्वामिन्! सुशील! सुलभाश्रितपारिजात! श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ २ ॥

आनूपुरार्पितसुजातसुगन्धिपुष्पसौरभ्यसौरभकरौ समसन्निवेशौ ।
सौम्यौ सदाऽनुभवनेऽपि नवानुभाव्यौ श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ३ ॥

सद्योविकासिसमुदित्वरसान्द्ररागसौरभ्यनिर्भरसरोरुहसाम्यवार्ताम् ।
सौम्येषु साहसपदेषु विलेखयन्तौ श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ४ ॥

रेखामयध्वजसुधाकलशातपत्रवज्राङ्कुशाम्बुरुहकल्पकशङ्खचक्रैः ।
भव्यैरलङ्कृततलौ परतत्त्वचिह्नैः श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥ ५ ॥

इति श्रीवेङ्कटेशप्रपत्तिः समाप्ता ॥

श्रीवादिभीकरगुरुभिरनुगृहीतं

## ॥ श्रीवेङ्कटेशमङ्गलम् ॥

लक्ष्मीसविभ्रमालोकसुभ्रूविभ्रमचक्षुषे । चक्षुषे सर्वलोकानां वेङ्कटेशाय मङ्गलम् ॥ १ ॥
श्रीवेङ्कटाद्रिशृङ्गाग्रमङ्गलाभरणाङ्घ्रये । मङ्गलानां निवासाय श्रीनिवासाय मङ्गलम् ॥ २ ॥
सर्वावयवसौन्दर्यसम्पदा सर्वचेतसाम् । सदा संमोहनायास्तु वेङ्कटेशाय मङ्गलम् ॥ ३ ॥
नित्याय निरवद्याय सत्यानन्तचिदात्मने । सर्वान्तरात्मने श्रीमद्वेङ्कटेशाय मङ्गलम् ॥ ४ ॥

स्वतस्सर्वविदे सर्वशक्तये सर्वशेषिणे । सुलभाय सुशीलाय वेङ्कटेशाय मङ्गलम् ॥ ५ ॥

परस्मै ब्रह्मणे पूर्णकामाय परमात्मने । प्रयुञ्जे परतत्त्वाय वेङ्कटेशाय मङ्गलम् ॥ ६ ॥

अकारतत्त्वमश्रान्तं आत्मनामनुपश्यताम् । अतृप्तामृतरूपाय वेङ्कटेशाय मङ्गलम् ॥ ७ ॥

प्रायः स्वचरणौ पुंसां शरण्यत्वेन पाणिना । कृपया दिशते श्रीमद्वेङ्कटेशाय मङ्गलम् ॥ ८ ॥

दयामृततरङ्गिण्याः तरङ्गैरपि शीतलैः । अपाङ्गैः सिञ्चते विश्वं वेङ्कटेशाय मङ्गलम् ॥ ९ ॥

स्रग्भूषाम्बरहेतीनां सुषमावहमूर्तये । सर्वार्तिशमनायास्तु वेङ्कटेशाय मङ्गलम् ॥ १० ॥

श्रीवैकुण्ठविरक्ताय स्वामिपुष्करिणीतटे । रमया रममाणाय वेङ्कटेशाय मङ्गलम् ॥ ११ ॥

श्रीमत्सुन्दरजामातृमुनिमानसवासिने । सर्वलोकनिवासाय श्रीनिवासाय मङ्गलम् ॥ १२ ॥

वासुदेवाय शान्ताय शुद्धज्ञानस्वरूपिणे । मम श्रीवेङ्कटेशाय श्रीनिवासाय मङ्गलम् ॥ १३ ॥

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् । श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥ १४ ॥

मङ्गलाशासनपरैः मदाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १५ ॥

इति श्रीवेङ्कटेशमङ्गलं समाप्तम् ॥

---

श्रीवरदनारायणगुरुभिरनुगृहीतं

## ॥ श्रीवरवरमुन्यष्टकम् ॥

सकलवेदान्तसारार्थपूर्णाशयं विपुलवाधूलगोत्रोद्भवानां वरम् ।
रुचिरजामातृयोगीन्द्रपादाश्रयं वरदनारायणं मद्गुरुं संश्रये ॥

पर्यङ्केऽपि परं तत्त्वं रङ्गशायिनमेव यः । उत्तिष्ठत्यनुभूयाहं तं वन्दे वरयोगिनम् ॥ १ ॥

उषस्युत्थाय लोकार्यप्रमुखाचार्यसूक्तिभिः । उच्चैः स्तुत्वाऽथ गोविन्दं तत्तद्दिव्यस्थलाञ्चितम् ॥ २ ॥

कावेर्याः कमलोद्भासि संस्पृश्य सलिलं शुभम् । गोविन्दगुणशीलादि ध्यात्वाऽश्रुकलिलाननः ॥ ३ ॥

रोमाञ्चितचलद्गात्रः भक्त्या परमयैव यः । पुनाति तीर्थं संगाह्य तं वन्दे वरयोगिनम् ॥ ४ ॥

भगवच्छास्त्रनिर्दिष्टविधिनैव निमज्ज्य यः । दिव्यकाषायशुद्धोर्ध्वपुण्ड्रमालादिभूषितः ॥ ५ ॥

महामन्त्रादि संजप्य विशिष्टैः परिवारितः । श्रीरङ्गधाम संसेव्य तत्तत्त्वान्युपबृंह्य च ॥ ६ ॥

आराध्य रङ्गराजादीन् अनुयागं विधाय च । अपुनादमृतैरार्यान् तं वन्दे वरयोगिनम् ॥ ७ ॥

वन्दे सौम्यवराग्रययोगिनमहं ध्यानामृतास्वादिनं श्रीरङ्गाधिपपादपङ्कजपरीचर्यागुणैकान्तिनम् ।
आज्ञाशास्त्रविधेरविच्युतमलं संसारिगन्धासहं कालेषु त्रिषु चैव कामितफलप्राप्त्यै गुरूणां गुरुम् ॥ ८ ॥

इति श्रीवरवरमुन्यष्टकं समाप्तम् ॥

श्रीवाधूलवरदनारायण गुरुवरप्रणीतः

## ॥ श्रीपराङ्कुशपञ्चविंशतिः ॥



श्रीपराङ्कशनुतिं य आतनोत् तत्पदाब्जपरभक्तिचोदितः । तं वधूलकुलभूषणं दयावारिधिं वरददेशिकं भजे ॥



श्रीमन्! पराङ्कुश! निरङ्कुशतत्त्वबोधवात्सल्यपूर्ण! करुणापरिणाहरूप!
सौशील्यसागरमनन्तगुणाकरं त्वां संसारतापहरणं शरणं वृणेऽहम् ॥ १ ॥

कासारसंयमिमुखाः कमलासहायभक्ताः प्रपत्तिपदवीनियता महान्तः ।
यस्याभवन्नवयवा इव पारतन्त्र्यात् तस्मै नमो वकुलभूषणदेशिकाय ॥ २ ॥

श्रीरङ्गराजपदपङ्कजसङ्गशीलं श्रेयः परं मधुरपूर्वकवेरपूर्वम् ।
नाथार्ययामुनयतीश्वरभागधेयं नाथं कुलस्य मम नौमि पराङ्कुशार्यम् ॥ ३ ॥

पापक्रियासु निरताः श्रृणुतास्मदुक्तिं तापत्रयेण भविनः परितप्यमानाः ।
आपद्धनं मधुरिपोर्भवतामविद्यास्वापप्रहाणनिपुणश्शरणं शठारिः ॥ ४ ॥

नित्योऽथ मुक्त उत तद्गुणको मुमुक्षुः व्यासादिवद्भगवता किमनुप्रविष्टः ।
अत्र्यादिसूनुरिह वर्णयुगक्रमात्किम् आसीत् पुराणपुरुषः शठवैरियोगी ॥ ५ ॥

कर्मेति केचिदपरे मतिरित्यथान्ये भक्तिं परे प्रपदनं प्रवदन्त्युपायम् ।
आम्नायसारचतुरास्त्वमितानुभावं त्वामेव यान्ति शरणं शठजिन्मुनीन्द्र! ॥ ६ ॥

भक्त्याद्युपायरहितः पतितो भवाब्धौ त्वत्पादसेवनरसेऽपि च दुर्बलोऽहम् ।
इत्थं सतीह शठकोप! दयैकमूर्ते! कृत्यं किमस्ति मम संसृतिमोचनाय ॥ ७ ॥

त्वद्दिव्यसूक्तिपरिशीलनमात्रमेव निःश्रेयसाधिगमने निरपेक्षहेतुः ।
तच्चास्ति मे न शठवैरिगुरो! महात्मन्! उज्जीवनं कथमहो! मम जायटीति ॥ ८ ॥

त्वन्नामकीर्तनमकृत्रिममातनोति यस्तस्य संसरणनिस्तरणं घटेत ।
दुर्वासनाकलुषितस्य न मेऽस्ति बुद्धिः तत्रापि केसरविभूष! किमात्मनीनम् ॥ ९ ॥

त्वत्किंकरत्वरसिकास्तव दासदासदास्यैकरस्यमुदिताश्च भजन्ति मुक्तिम् ।
तत्राप्यहं शकनवान् न शठारियोगिन्! अत्याहितं कथमपैतु भवोत्थितं मे ॥ १० ॥

त्वद्विग्रहेक्षणमथो तव संस्मृतिश्च मुक्त्यै भवेदिति वदन्ति पराङ्कुशार्य! ।
निद्राप्रमादमलिनीकृतमानसस्य तत्रापि शक्तिरिह मे न कथं भवेयम् ॥ ११ ॥

एवं कदाचिदपि कुत्रचिदस्त्युपायः नैवाघनाशनविधौ मम तावकस्य ।
आकस्मिकीं तव कृपामपहाय मायाकोलाहलप्रशमनीं कुरुकापुरीश! ॥ १२ ॥

अव्याजबन्धुमविशेषमशेषजन्तोः उद्वेलवत्सलतया कृपया च पूर्णम् ।
त्वामामनन्ति शठवैरिमुने! ततस्ते हातुं न युक्तमपराधिनमप्यहो! माम् ॥ १३ ॥

यावच्च यच्च दुरितं सकलस्य जन्तोः तावच्च तत्तदधिकं च ममास्ति सत्यम् ।
एतद्वचः कथमभूत् सततानृतोक्तिशीलस्य मे शठरिपो! तदिदं विचित्रम् ॥ १४ ॥

शास्त्रेण यद्विहितमाचरणीयमेतत् सर्वैर्निषिद्धमिह यत्तदुपेक्षणीयम् ।
इत्यादिकं शठरिपो! सदसि ब्रवीमि है! संतनोमि रहसि स्ववचोविरुद्धम् ॥ १५ ॥

प्रच्छन्नपातकशतावृतचेतसो मे संप्रीणिताः प्रणतिभूमिकया कयाचित् ।
सत्कारमादरभरेण परावरज्ञाः कुर्वन्ति हन्त! शठवैरिमुने! हतोऽस्मि ॥ १६ ॥

पद्भ्यां शपे तव शठारिमुनीन्द्र! योऽभूत् उद्दामदोषगणनान्तिमकोटिनिष्ठः ।
सोऽपि प्रकृष्टविभवो यदपेक्षया स्यात् तस्माच्च पापभरितोऽहमितो न पापः ॥ १७ ॥

पूर्वैः स्वनैच्यमनुसंहितमार्यवर्यैः मामेव वीक्ष्य महतां न तदस्ति तेषाम् ।
नैच्यं त्विदं शठरिपो! मम सत्यमेव मत्तः परो न मलिनो यत आविरस्ति ॥ १८ ॥

उक्त्वा स्वदोषविषयं वचनं त्वदग्रे संसारभीरुरिव तेन च वञ्चकोऽहम् ।
सामर्थ्यमेव शठकोप! विभावयामि संवीक्ष्य कं गुणमिहासि मयि प्रसन्नः ॥ १९ ॥

किं तु क्रियासमभिहारकृतापराधः हन्तानुतप्य पुनरप्यपराधकारी ।
पद्मासखस्य परिहासरसोचितोऽहम् एतद्विलोक्य शठकोप! मयि प्रसीद ॥ २० ॥

कामप्रमोहमदमत्सरमन्युलोभैः पारंपरीत उदितैः परिपीड्यमानम् ।
दैवात् त्वदीक्षणपथं दयया शठारे! पाहि प्रपन्नमिममुन्नमदागसं माम् ॥ २१ ॥

कार्या कृपा सुमतिभिः खलु दुःखितेषु दुःखी मया न सदृशो भृशदुःखभाजाम् ।
तस्मात्तवाखिलजनेषु च याऽनुकंपा मय्येव तां शठरिपो निभृतं निधेहि ॥ २२ ॥

विश्वोपकारकमघार्णवतारकं त्वाम् अप्राप्य है शठरिपो! हत एव पूर्वम् ।
अद्य त्वदीयकृपया प्रतिलब्धसत्वः त्वत्सेवनामृतरसेन सुखी भवानि ॥ २३ ॥

अत्राप्यमुत्र करणत्रितयप्रवृत्त्या त्वत्पादपङ्कजजुषां विदुषां प्रसादम् ।
नित्यं लभेमहि न चान्यदपेक्षितं नः प्रत्यग्रकेसरपरिष्कृतकारिसूनो! ॥ २४ ॥

वाधूलवेङ्कटपतिं वरदार्यसूनुम् अस्मद्गुरुं तव पदप्रवणं समीक्ष्य ।
अज्ञं कृतागसमनाथमकिंचनं मां त्वत्किंकरं शठरिपो! सततं कुरुष्व ॥ २५ ॥

इति श्रीपराङ्कुशपञ्चविंशतिः समाप्ता ॥

## ॥ प्रार्थनापञ्चकम् ॥

यतीश्वर! शृणु श्रीमन्! कृपया परया तव। मम विज्ञापनमिदं विलोक्य वरदं गुरुम् ॥ १ ॥
अनादिपापरचिताम् अन्तःकरणनिष्ठिताम्। यतीन्द्र! विषये सान्द्रां विनिर्वासय वासनाम् ॥ २ ॥
अपि प्रार्थयमानानां पुत्रक्षेत्रादिसंपदाम्। कुरु वैराग्यमेवात्र हितकारिन् यतीन्द्र! नः ॥ ३ ॥
यथाऽपराधा न स्युर्मे भक्तेषु भगवत्यपि। तथा लक्ष्मणयोगीन्द्र! यावद्देहं प्रवर्तय ॥ ४ ॥
आमोक्षं लक्ष्मणार्य! त्वत्प्रबन्धपरिशीलनैः। कालक्षेपोऽस्तु नः सद्भिः सहवासमुपेयुषाम् ॥ ५ ॥
इत्येतत् सादरं विद्वान् प्रार्थनापञ्चकं पठन्। प्राप्नुयात्परमां भक्तिं यतिराजपदाब्जयोः ॥ ६ ॥

इति प्रार्थनापञ्चकं समाप्तम् ॥

श्रीमदभिरामवरगुरुभिरनुगृहीता

## ॥ नक्षत्रमालिका ॥

अस्मासु वत्सलतया कृपया च भूयः स्वेच्छावतीर्णमि(व)ह सौम्यवरं मुनीन्द्रम्।
आचार्यपौत्रमभिरामवराभिधानम् अस्मद्गुरुं परमकारुणिकं नमामि ॥

श्रीमान् पराङ्कुशमुनिर्जीयात् यज्ज्ञानमुद्रया। नेन्द्रियाश्वयुजो नृणां नित्यं विषयवीथयः ॥ १ ॥
यदुरसि **भरणी**या स्रग्विकसितवकुलानद्धा। स जयति महिमा नाथो मुररिपुपदसक्तो नः ॥ २ ॥
नन्ताऽनन्ताङ्घ्रिनलिनयुग्मे कर्ता लोक**कार्तिक**वलनानाम्। भद्राय द्राविडनिगमानां द्रष्टा पुष्टाय वकुलभृत्स्यात् ॥३॥
स्यादेव सा मे फणितिश्शठारेः ययोदितोच्चैस्सरणिर्जनानाम्। आ**रोहिणी** नाप्यवरोहिणी हि वेदोदिता तु द्वयमभ्युपैति॥
तिलकमाह न काचिदपि श्रुतौ त्रिजगता**मृगशीर्ष**समुत्थिता। स्फुटतरं वकुलाभरणीयवाक् पुरुषमादिमशेषपदैरपि ॥

पित्रादिस्सकलविधोऽपि बन्धुवर्गः यस्यासीत्सरसिजवासिनीसहायः।
आविस्स्युर्घनकरुणारसावसेकै**रार्द्रा** मे वकुलभृतः कटाक्षपाताः ॥ ६ ॥

तामाश्रयामि करुणां वकुलाभिरामां याऽसौ **पुनर्वसु**मतीवलयेऽवतीर्णा।
प्रज्ञादृशोन्मिषितया प्रथितानुभावा ज्योतिः परं यदनिदं तदिदं चकार ॥ ७ ॥

रचितवति रमाया नायकस्याङ्घ्रि**पुष्य**त्प्रणयरससुधाब्धिस्रोतसि स्वैरगाहम्।
प्रभवति कलिघर्मप्रावृषेण्याम्बुवाहे वकुलधरमुनीन्द्रे तापवार्ता कथं नः ॥ ८ ॥

नमज्जनस्य चित्तभित्तिभक्तिचित्रतूलिका भवा**हि**वीर्यभञ्जने नरेन्द्रमन्त्रयन्त्रणा।
प्रपन्नलोककैरवप्रसन्नचारुचन्द्रिका शठारिहस्तमुद्रिका हठाद्धुनोतु मे तमः ॥ ९ ॥

मनस्स्फटिकदर्पणप्रतिफलत्परब्रह्मणः प्रदर्शनमिवाचरन् प्रथितबोधमुद्राङ्कितः।
सतामभयशंसिता भवभयाभितप्तात्मना**मघा**नि शमयेत नः शठरिपोरवामः करः ॥ १० ॥

रमयतु शठशत्रुरत्युन्नताचारयुक्तैर्जनैः अवनतपदपद्मयुग्मोऽनुकम्पामृताम्भोनिधिः ।
बहुविधकृतपूर्वफल्गुन्यगाचारचिन्ताकुलं हृदयमसदृशात्मपादारविन्दानुषङ्गान्मम ॥ ११ ॥
मग्न मानस! मास्म भूः शठरिपोर्व्याजसिद्धा कृपा नौका काचन नाविकोऽपि स पुनस्संतारकग्रामणीः ।
एतेनोत्तर फल्गुनीरसपरिक्लिष्टोपभोगोर्मिकं दुःखावर्तदुरन्तपारगमनं संसारवाराकरम् ॥ १२ ॥
रत्नदीपिकायमानहस्तमुद्रिकाकृतत्रयीगिरीन्द्रकन्दरान्तरालगाढरूढरूढिमन्निधानसूचनेन ।
द्राविडागमोपगीतिमूलसेकशीतवीतनिद्रपत्रदिव्यतिन्त्रिणीसमीपगेन नाथवानहं पराङ्कुशेन ॥ १३ ॥
नत्या न त्यागकारी क्षणमपि चिदचिन्नायकामेयकामे छन्दश्छन्दस्वरूपे महसि कमलया भासमानेऽसमाने ।
श्रेयः श्रेयस्विसङ्घैः परिचयसुरभिः कैसराणां सराणां पातात्पाताद्भवाब्धौ शठरिपुरिह नो वीक्षणेन क्षणेन ॥ १४ ॥
नप्रपत्तिवर्त्मनःप्रवर्तनापदानवासनानुसारि नव्यपेतसर्वदाजलाशयान्वयं कथं समं सरोजम् ।
स्वातिकामियोगिबृन्दचित्तपद्मबद्धसौहृदानुरक्तरूपयोश्शठारिपादयोर्युगेन सन्नतार्तिभञ्जनेन ॥ १५ ॥
नत्वा यां कुसुमायुधेषुधिरुचिव्याघातमातन्वतीं शेमुष्या महतामहायि तरुणीजङ्घासु जङ्घालता ।
विस्तीर्णच्छविशाखया शठरिपोर्वृत्तानुपूर्वीजुषा जङ्घाकल्पतरुश्रिया सुरभितं चिन्तावनं मामकम् ॥ १६ ॥
कनदवयवलोलशोभाभिधानापगास्रोतसः समुदितगुरुबुद्बुदाकारसन्देहसन्दायिनोः ।
ककुदधिगतमित्रभावं स्वभावाद्युगं जानुनोः मम हृदि शठवैरिनाम्नो मुनीशस्य संदीव्यतु ॥ १७ ॥
तुलासरणिसीमनि प्रथितरूपया हस्तिनां करेण करभेण वा कदलिकाप्रकाण्डेन वा ।
तथोपरि च पश्यतां नयनबन्धनज्येष्ठया चमत्कृतिमती मतिश्शठरिपूरुलक्ष्म्या मम ॥ १८ ॥
महःप्ररोहमञ्जरीमनोज्ञरत्नमेखलाकलापपुष्पिता कटीतटीपटी शठद्विषः ।
उरस्स्रवत्प्रभाझरीनिपातनिम्ननाभिकाऽवटोत्थफेनमण्डलीवितर्कमूलमेव नः ॥ १९ ॥
नयनसुभगनाभीमुद्दिशन्ती शठारेः सर इति परिभाषा ढौकते सार्थकत्वम् ।
सततमितरथा नः संहता नेत्रमीनाः कथमिह विहरेयुः कौतुकोद्रेकयुक्ताः ॥ २० ॥
तां मध्यदेशसुषमामवलोकयामि रोमावलित्रिवलिकारुचिरां शठारेः ।
रेखोत्तरा यदुपमार्मधिकाभिलाषा ढौकेत वा यदि न वा वटपत्रशोभा ॥ २१ ॥
भासा न व्यतिभिदुरीभवन्ति भृङ्गा हारस्थादुरसि हरिन्मणेश्शठारेः ।
आरूढा वकुलमयीं स्रजं सुगन्धिं शब्देन श्रवणसुखेन यान्ति भेदम् ॥ २२ ॥
दमवतः कुरुते मदनोद्धतान् सुघटयत्यबुधान् बुधनिष्ठया । प्रथितमुद्रमनिद्रसरोरुहप्रणयि पाणितलं शठजिन्मुनेः ॥
नेह संसरणरोगसंहतिः जायते शतभिषक्चिकित्सया । अन्तरेण शठवैरिकन्धरालम्बमानवकुलस्रजां रजः ॥ २४ ॥
जन्मध्वंसं दिशति जनानां वक्त्रं दीप्रोष्ठपदमनोज्ञम् । मन्दस्मेरं मधुरकटाक्षं सुभ्रूलेखं सुभगकपोलम् ॥ २५ ॥
लसति हि भजतां भद्रोत्तरपदकरणारूढम् । शठरिपुमकुटं भासा परिहृतदुरितध्वान्तम् ॥ २६ ॥
अन्तरेण शठारातिं कस्संसारेऽवतीह नः । तदहं हृदये नित्यं निदधे तद्वपुःश्रियम् ॥ २७ ॥
वाचिकी वरिवस्या मे तारकामालिकात्मिका । पराङ्कुशपदाब्जेन परिष्कारवती भवेत् ॥ २८ ॥

अनेकपूर्वाचार्यैरनुगृहीताः

## ॥ अनेकविषयमुक्तकश्लोकाः ॥

यस्य प्रसादकलया बधिरः शृणोति पङ्गुः प्रधावति जवेन च वक्ति मूकः ।
अन्धः प्रपश्यति सुतं लभते च वन्ध्या तं देवमेव वरदं शरणं गतोऽस्मि ॥ १ ॥

आशैलादद्रिकन्याचरणकिसलयन्यासधन्योपकण्ठात् आरक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः ।
आ च प्राच्यप्रतीच्यक्षितिधरयुगलाच्चन्द्रसूर्यावतंसात् मीमांसाशास्त्रयुग्मश्रमविमलमना मृग्यतां मादृशोऽन्यः ॥ २ ॥

न वयं कवयस्तु केवलं न वयं केवलतन्त्रपारगाः । अपि तु प्रतिवादिवारणप्रकटाटोपविपाटनक्षमाः ॥ ३ ॥

वन्दे गोविन्दतातौ मुनिमथ मनवै लक्ष्मणार्यं महान्तं ध्यायेयं यामुनार्यं मम हृदि तनवै राममेवाभियायाम् ।
पद्माक्षं प्रेक्षिषीय प्रथममपि मुनिं नाथमीडे शठारिं स्तौमि प्रेक्षेय लक्ष्मीं शरणमशरणः श्रीधरं संश्रयेयम् ॥ ४ ॥

त्वं मेऽहं मे कुतस्तत् तदपि कुत इदं वेदमूलप्रमाणात् एतच्चानादिसिद्धादनुभवविभवात् सोऽपि साक्रोश एव ।
क्वाक्रोशः कस्य गीतादिषु मम विदितः कोऽत्र साक्षी सुधीः स्यात् हन्त त्वत्पक्षपाती स इति नृकलहे मृग्यमध्यस्थवत् त्वम् ॥

अविज्ञातो देवे परिबृढतया वा विदितया स्वभक्तेर्भूम्ना वा जगति गतिमन्यामविदुषाम् ।
गतिर्गम्यश्चासौ हरिरिति जितन्ताह्वयमनोः रहस्यं व्याजह्रे स खलु भगवान् शौनकमुनिः ॥ ६ ॥

पुरा सूत्रैर्व्यासः श्रुतिशतशिरोर्थं ग्रथितवान् विवव्रे तं श्राव्यं वकुलधरतामेत्य स पुनः ।
उभावेतौ ग्रन्थौ घटयितुमलं युक्तिभिरसौ पुनर्जज्ञे रामावरज इति स ब्रह्ममुकुरः ॥ ७ ॥

अर्वाञ्चो यत्पदसरसिजद्वन्द्वमाश्रित्य पूर्वे मूर्ध्ना यस्यान्वयमुपगता देशिका मुक्तिमापुः ।
सोऽयं रामानुजमुनिरपि स्वीयमुक्तिं करस्थां यत्संबन्धादमनुत कथं वर्ण्यते कूरनाथः ॥ ८ ॥

श्रीमद्द्वारवरं महद्भि बलिपीठाग्र्यं फणीन्द्रह्रदं गोपीनां रमणं वराहवपुषं श्रीभट्टनाथं मुनिम् ।
श्रीमन्तं शठवैरिणं कलिरिपुं श्रीभक्तिसारं मुनिं पूर्णं लक्ष्मणयोगिनं मुनिवरानाद्यानथ द्वारपौ ॥ ९ ॥

श्रीमन्मज्जनमण्डपं सरसिजां हेतीशभोगीश्वरौ रामं नीलमणिं महानसवरं तार्क्ष्यं नृसिंहं प्रभुम् ।
सेनान्यं करिभूधरं तदुपरि श्रीपुण्यकोट्यां हरिं तन्मध्ये वरदं रमासहचरं वन्दे तदीयैर्वृतम् ॥ १० ॥

काषायशोभिकमनीयशिखानिवेशं दण्डत्रयोज्ज्वलकरं विमलोपवीतम् ।
उद्यद्दिनेशनिभमुल्लसदूर्ध्वपुण्ड्रं रूपं तवास्तु यतिराज! दृशोर्ममाग्रे ॥ ११ ॥

नमःप्रणवशोभितं नवकषायखण्डाम्बरं त्रिदण्डपरिमण्डितं त्रिविधतत्त्वनिर्वाहकम् ।
दयाञ्चितदृगञ्चलं दलितवादिवाग्वैभवं शमादिगुणसागरं शरणमेमि रामानुजम् ॥ १२ ॥

एतानि तानि भुवनत्रयपावनानि संसाररोगशकलीकरणौषधानि ।
जिह्वातले मम लिखानि यथा शिलायां रामानुजेति चतुराण्यमृताक्षराणि ॥ १३ ॥

देवाधीशनृसिंहपाण्डवमहादूतप्रवालप्रभान् श्रीवैकुण्ठपतिं त्रिविक्रमहरिं नीरेशमेधेश्वरौ ।
नीलव्योमविभुं महोरगहरिं ज्योत्स्नेन्दुवक्त्रं हरिं चोरेशं कृतचिन्तभक्तहृदयावासं मुकुन्दाह्वयम् ॥ १४ ॥

कामावासपतिं नृकेसरिवरं दीपप्रकाशप्रभुं श्रीयुक्ताष्टभुजास्पदेशमनघं श्रीमद्यथोक्तक्रियम् ।
इत्यष्टादशदिव्यमङ्गलवपुर्देवान् सरोयोगिना साकं निस्तुलकाञ्च्यभिख्यनगरी नाथान् नमामस्सदा ॥ १५ ॥

## ॥ श्रीरामानुजचतुःश्लोकी ॥

अनिशं भजतामनन्यभाजां चरणाम्भोरुहमादरेण पुंसाम्। वितरन्निभृतं विभूतिमिष्टां जय रामानुज ! रङ्गधाम्नि नित्यम् ॥

भुवि नो विमतांस्त्वदीयसूक्तिः कुलिशीभूय कुदृष्टिभिस्समेतान् ।
शकलीकुरुते विपश्चिदीड्या जय रामानुज! शेषशैलश्रृङ्गे ॥ २ ॥

श्रुतिषु स्मृतिषु प्रमाणतत्त्वं कृपयालोक्य विशुद्धया हि बुद्ध्या ।
अकृथाः स्वत एव भाष्यरत्नं जय रामानुज! हस्तिधाम्नि नित्यम् ॥ ३ ॥

जय मायिमतान्धकारभानो! जय बाह्यप्रमुखाटवीकृशानो !
जय संश्रितसिन्धुशीतभानो! जय रामानुज! यादवाद्रिश्रृङ्गे ॥

रामानुजचतुःश्लोकीं यः पठेन्नियतस्सदा । प्राप्नुयात्परमां भक्तिं यतिराजपदाब्जयोः ॥

श्रीरामानुजचतुःश्लोकी समाप्ता ॥

## ॥ श्री पार्थसारथि सुप्रभातम् ॥

श्रीशैलेशदयापात्रं* धीभक्त्यादिगुणार्णवम् । यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥
लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् । अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥
यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः रामानुजस्य चरणौ शरणं प्रपद्ये ॥
माता पिता युवतयस्तनया विभूतिः सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्वकुलाभिरामं श्रीमत्तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना ॥
भूतं सरश्च महदाह्वयभट्टनाथ श्रीभक्तिसारकुलशेखरयोगिवाहान् ।
भक्ताङ्घ्रिरेणुपरकालयतीन्द्रमिश्रान् श्रीमत्पराङ्कुशमुनिं प्रणतोऽस्मि नित्यम् ॥
कौसल्यासुप्रजा राम! पूर्वा सन्ध्या प्रवर्तते । उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥
उत्तिष्ठोत्तिष्ठ गोविन्द! उत्तिष्ठ गरुडध्वज! । उत्तिष्ठ कमलाकान्त त्रैलोक्यं मङ्गलं कुरु ॥
वन्दे बृन्दावनान्ते मणिगणविलसत्सौधहर्म्ये गृहाढ्ये संराजत्कैरविण्यास्तटभुवि घृणिमद्गोपुरे सालरम्ये ।
आनन्दाख्ये विमाने मुनिगणविनुतं पार्थसूतञ्च रामं रङ्गेशं श्रीनृसिंहं गजवरवरदं श्रीक्षितिभ्यां समेतम् ॥
मातः श्रीर्जगतामशेषजगतां नाथस्य भर्तुः प्रिये! तद्वक्षस्स्थलनित्यवासिनि! सदा श्रीवेदवल्ल्याह्वये! ।
बृन्दारण्यनिवासियोगिसदने संभूय वारान्निधेर्मन्नाथामरभूरुहेण सहिते! नैशं प्रभातं शुभम् ॥ २ ॥
श्रीमद्वेदलतां श्रितामृतलतां बृन्दावने संस्थितां सम्यग्दृष्टपरावरेण मुनिना संवर्धितां तद्धिताम् ।
लब्ध्वा तां समुपेत्य दुग्धजलधेस्तद्दत्तनामा वसन् मन्नाथाश्रितकल्पभूरुह विभो! ते सुप्रभातं हरे ॥ ३ ॥
समस्तकल्याणगुणैकधाम्नः स्वशक्तिलेशोद्धृतभूतलस्य ।
प्रह्लादभक्तेः परिवर्धकस्य मन्नाथनाम्नस्तव सुप्रभातम् ॥ ४ ॥

श्रीमत्कैरविणीसरोवरतटे नित्यं तपः कुर्वते सम्यग्ज्ञानवतां वराय भृगवे दत्त्वा त्वभीष्टं वरम् ।
लब्ध्वा तस्य सुतां जगत्त्रयमुदे तस्मै प्रसन्नस्य ते मन्नाथाद्य हि सुप्रभातमखिलांस्त्रातुं प्रसीद प्रभो ॥ ५ ॥
श्रीमन्धराभरविमोचनदीक्षितं त्वां संबोधयन्ति विधिशङ्करशक्रमुख्याः ।
स्वामिन्! जगत्त्रयविभो! यदुवंशनाथ! श्रीपार्थसूत! भगवंस्तव सुप्रभातम् ॥ ६ ॥
भास्वान् विकासयति पङ्कजकुड्मलानि पद्माकरेषु परिकूजितसारसेषु ।
कूजन्ति पञ्जरशुकास्सह शारिकाभिः श्रीपार्थसूत! भगवंस्तव सुप्रभातम् ॥ ७ ॥
वीणां प्रगृह्य मुनिवाहनयोगिवर्यो गानं करोति सहतुंबुरुनारदाद्याः ।
सङ्गीतवाद्यनिपुणास्तव सुप्रभातगाथाः पठन्ति यदुनन्दन! सुप्रभातम् ॥ ८ ॥
ब्रह्मादयस्सुरपतिप्रमुखा दिगीशाः स्वस्वाधिकारनियतास्तव सैन्यनाथाः ।
संप्रार्थयन्ति तव सद्मपुरोविभागे श्रीपार्थसूत भगवंस्तव सुप्रभातम् ॥ ९ ॥
गोपाङ्गनास्तव हि मङ्गलगीतकानि गायन्ति कामशरपीडितगात्रयष्टयः ।
गोपालबालककुलानि विसृज्य वत्सान् त्वां प्रार्थयन्ति यदुशेखर! सुप्रभातम् ॥ १० ॥
स्नेहप्रतिस्नुतपयोधरभारयुक्ता गावस्स्ववत्ससहिताः परितोषयुक्ताः ।
वत्सान् विसृज्य च पयः परिदोहयन्ति गोपालकास्तव यदूद्वह! सुप्रभातम् ॥ ११ ॥
बृन्दावने विहरतां पशुपालकानां रक्षार्थमात्तवरवेत्र! सुशङ्खपाणे! ।
भ्रात्रा समेत! सुमनोहर भूषणार्ह! प्रोत्तिष्ठ पार्थरथपालक! सुप्रभातम् ॥ १२ ॥
बृन्दावनान्तरमनोज्ञवनान्तरेषु नानातरुप्रवरशोभिजलाशयेषु ।
कूजद्विहङ्गमगणेषु मधुव्रतानि गायन्ति पार्थरथनायक! सुप्रभातम् ॥ १३ ॥
मन्दारकुन्दवरकैतकमाधवीनामामोदनिर्भरवनान्तरनिस्सृतोऽसौ ।
मन्दानिलः प्रसरति प्रवरः प्रभाते श्रीपार्थसूत भगवंस्तव सुप्रभातम् १४ ॥
संफुल्लकैरवसरोवरनीरसंस्था हंसास्सचक्रमिथुनास्सह सारसैश्च ।
तीरे तु देशिकगणैस्सह संविवादान् तन्वन्ति पार्थरथनायक! सुप्रभातम् ॥ १५ ॥
तद्देशिकास्सकलशास्त्रविदां वरिष्ठास्त्वत्प्रोक्तदिव्यचरमार्थनिविष्टभावाः ।
कासारयोगिमुखदेशिकसूक्तिनिष्ठास्तिष्ठन्ति किङ्करकृतौ तव सुप्रभातम् ॥ १६ ॥
श्रीभट्टनाथकृतिभिस्तव मङ्गलानि शंसन्ति देशिकवरास्त्वमितप्रभावाः ।
गोदासुसूक्तिभिरपि प्रतिबोधयन्ति श्रीपार्थसूत भगवंस्तव सुप्रभातम् ॥ १७ ॥
सूर्योदये ग्रहगणास्त्वितरे सुरेन्द्रा आज्ञां तवैव निजवैभवसम्प्रयुक्ताः ।
सम्प्रार्थ्य तोषितुमिहाद्य जगत्पतिं त्वां तिष्ठन्ति पार्थरथनायक! सुप्रभातम् ॥ १८ ॥
नित्यार्चनां रचयितुं विविधोपहारान् वस्तूनि वस्त्रवरदिव्यविभूषणानि ।
संगृह्य वैदिकशिखामणयः प्रभाते तिष्ठन्ति पार्थरथभूषण! सुप्रभातम ॥ १९ ॥
काश्मीरकेसरयुतं हरिचन्दनञ्च कस्तूरिकां च घनसारवरं गृहीत्वा ।
द्वारि स्थितास्तव हि दासगणास्समस्ताः श्रीपार्थसूत! भगवंस्तव सुप्रभातम् ॥ २० ॥

संफुल्लपङ्कजनवोत्पलकैरवाणि सचम्पकैर्मरुवकैः कृतमालिकानि ।
संगृह्य तावकसमर्चनमादरेण तिष्ठन्ति कर्तुमनघास्तव सुप्रभातम् ॥ २१ ॥
भाग्याधिकास्तव पदाब्जनिविष्टभावाः पीताम्बराण्यपरिमेयविभूषणानि ।
रत्नानि काञ्चनयुतानि समर्पयन्ति श्रीपार्थसूत भगवंस्तव सुप्रभातम् ॥ २२ ॥
प्रातःप्रयुक्तनवनीतपयःफलानि मुद्गान्नलड्डुकमनोहरमिश्रितानि ।
सोपायनानि च समर्पयितुं यतन्ते श्रीवैष्णवास्तव यदूद्वह! सुप्रभातम् ॥ २३ ॥
भेरीमृदङ्गपटहानकगोमुखादिवाद्यानि घोषयति दासगणस्तवाग्रे ।
तिष्ठन्ति नर्तनपरा गणिकास्समस्ताः श्रीपार्थसूत भगवंस्तव सुप्रभातम् ॥ २४ ॥
हस्तीन्द्रमूर्ध्नि धृतकाञ्चनकुम्भतीर्थं छत्रावृतं विधृतचामरयुग्ममारात् ।
श्रीमन् प्रभो! तव हि मङ्गलमज्जनाय श्रीपार्थसूत भगवंस्तव सुप्रभातम् ॥ २५ ॥
एकान्तिनश्च विमलाशययोगिवर्याः अध्यापकास्तव पदाब्जनिविष्टभावाः ।
तिष्ठन्ति सन्निधिमुपेत्य भवत्पदाब्जे सेवार्थमर्जुनसखे! तव सुप्रभातम् ॥ २६ ॥
त्वत्सेवनाय सकलद्रविडागमानां वक्ता पराङ्कुशमुनिस्स्वपदप्रपन्नैः ।
रामानुजोऽपि कृतनित्यसमस्तकृत्यस्त्वद्द्वारि तिष्ठति विभो! तव सुप्रभातम् ॥ २७ ॥
उत्तिष्ठ लक्ष्मणगुरो! सह सीतयाऽद्य धर्मं विवर्धय विभो! जय पालयास्मान् ।
दासान् कुरुष्व सहसा तव किंकरांश्च ते सुप्रभातमधुना रघुवंशनाथ ॥ २८ ॥
श्रीमन्गजेन्द्रवरदाश्रितपारिजात! श्रीवैनतेयभुजमूलविभूषणाढ्य! ।
इन्द्रादिदेवगणपूजितपादपद्म! श्रीमन्वरप्रद! सुरेश्वर! सुप्रभातम् ॥ २९ ॥
श्रीमन्नृसिंह जगतां जनिहेतुभूत! सम्पालनान्तकरणादिषु जागरूक! ।
अन्तःप्रविश्य च नियन्तृतया भवास्मान् श्रीमन्नृसिंह! भगवंस्तव सुप्रभातम् ॥ ३० ॥
श्रीमन्नृसिंह तव मङ्गलमस्तु नित्यं सूर्येन्दुतारकसमानमहःप्ररोहैः ।
नैशं तमःप्रसरमान्तरमप्यपास्तं स्वामिन्नृसिंह भगवंस्तव सुप्रभातम् ॥ ३१ ॥
काव्योऽपि पूर्वदिशि संस्थितपर्वतस्थो वाचां पतिर्हिमकरोऽस्तमितो बभूव ।
पक्षी निनादमपि पञ्जरगः करोति श्रीमन्नृसिंह भगवंस्तव सुप्रभातम् ॥ ३२ ॥
श्रीपार्थसारथि, रघूत्तम, वेदवल्लीमन्नाथ, सौम्यनरसिंह, वरप्रदानाम् ।
ये सुप्रभातमनिशं प्रपठन्ति तेषां ब्रह्मेश्वराद्यसुलभं सुलभं पदं स्यात् ॥ ३३ ॥

श्रीपार्थसारथिसुप्रभातम् समाप्तम् ॥

समाप्ता च स्तोत्रमाला ॥

9 to 14 Formes—लिबर्टी मुद्रणालये मुद्रितः, चेन्नपुरी १.

